श्रेष्ठि–देवचन्द्र–लालभाई–जैनपुस्तकोद्धारे ग्रन्थाकः–१२३

# श्रीमती आवश्यकनिर्युक्तेरवचूर्णिः

श्रीजैनशासनादम्भस्तम्भायमानश्रीमत्तपोगच्छगगनाङ्गणदिनमणिश्रीमत्सोमसुन्दरसूरीश्वरविनेयैस्तु
श्रीमद्धीरसुन्दरसूरिविरचिता ।

पृष्ठं १–२४० यावत्

सम्पादकः– पं. प्रबोधसागरशिष्यमुनिप्रमोदसागरः

प्रकाशकः– श्रेष्ठि देवचन्द्रलालभाई–जैनपुस्तकोद्धारग्रन्थस्य
कार्यवाहकः– मोतीचन्द मगनभाई चोक्सी

२५००
२०३०

मूल्यं रुप्यपञ्चकम्

खिस्ताब्दः १९७४
प्रतयः ५००

## —: प्रकाशकीय :—

अमने जणावतां हर्ष थाय छे के अमारी आ संस्था आज सुधीमां अनेक प्रकाशनो प्रगट करी चूकी छे. श्री ज्ञानसागरसूरि कृत आवश्यक अवचूर्णिना बे भाग छपावी चुकी छे. पण अमारो ए मुद्दो छे के जे जे आगम-ग्रंथोनी पञ्चाङ्गीमानुं प्रकाशन न थयुं होय तेनुं प्रकाशन करवुं, ते मुदाए पू. आचार्य श्रीधीरसुन्दरसूरिकृत आवश्यक अवचुर्णिनुं कार्य शरु कर्युं छे तेना २४० पृष्ठ पर्यन्तनो आ प्रथम भाग बहार पाडीए छीए ।

आना सम्पादन कार्यनी जवाबदारी पं. श्री प्रबोधसागरजी म.ना शिष्य मुनि श्रीप्रमोदसागरजीए कर्युं छे. तेमना कार्यमां आगमोद्धारक शिशु पं. श्री कंचनसागरजीए सहकार आप्यो छे. आ भागनी प्रेसकोपीनो मोटो भाग पू. आ. श्रीहेमसागरसूरिजीए कर्यो हतो, गुरुदेवश्रीए ते तपास्यो हतो. ते बधाना अमो ऋणी छीए. तेज प्रेसे काम करी आप्युं ते बदल तेनो पण आभार मानीए छीए ।

प्रकाशक

इदं पुस्तकं श्रेष्ठिदेवचन्द्रलालभाईपुस्तकोद्धारसंस्थायाः कार्यवाहकेन मोतीचन्द मगनभाई चोकसी इत्यनेन राजनगरस्थ-
जसवंतप्रिन्टींगमुद्रणालये चीमनलाल—अमुलखभाई शाहद्वारया मुद्रापितम् ।
अस्य पुनर्मुद्रणाद्याः सर्वेऽधिकारा एतद्भाण्डागारकार्यवाहकैरायतीकृताः सन्ति ।

Sheth Devchand Lalbhai Jain Pustakoddhar Fund, Series No. 123

# Shreemati Avashyak Avachurni

Commentary [Avachurni] by

**Dhirsundar Suri**

Page 1 to 240

Pannyas Prabodhsagar Shishya Muni Pramodsagar

Vir Samvat . 2500
Vikram Samvant . 2030

Price Rs. 5-00

Christan : 1974

श्रीमती आवश्यकनिर्युक्तेरवचूर्णिः
श्रीजैनशासननभोमणिसमानश्रीतपोगच्छगगनांगणदि-
नमणिश्रीमत्सोमसुन्दरसूरीश्वरविनेयरत्न-
श्रीधीरसुन्दरसूरिविरचिता

परमेष्ठिनः प्रणिदधत् प्रणमन् श्रीसोमसुंदरगुरुँश्च ।
आवश्यकावचूरिं लिखाम्यहं स्वपरहितहेतोः ॥१॥

प्रेक्षावतां प्रवृत्त्यर्थमादौ प्रयोजनादिकं स्थाप्यं, अन्यथा न युक्तोऽयमावश्यकप्रारंभप्रयासः, तथा मंगलमप्यादौ वक्तव्यं, अन्यथा कर्तॄणां श्रोतॄणां चाविघ्नेनेष्टफलसिद्ध्ययोगात् । उक्तं च "प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटं । मंगलं चैव शास्त्रादौ, वाच्यमिष्टार्थ सिद्धये ॥१॥" तत्र प्रयोजनं द्विधा परमपरं च, पुनरेकैकं द्विधा कर्तृगतं

गाथा—१

॥१॥

श्रोतृगतं च, तत्र द्रव्यास्तिकनयमतपर्यालोचनायामागमस्य नित्यत्वात्कर्तुरभाव एव, तथा चोक्तं—"एषा द्वादशांगी न कदाचिन्नासीत् न कदाचिन्न भवति न कदाचिन्न भविष्यतीति ध्रुवा नित्या शाश्वतीत्यादि, पर्यायास्तिकनयमतपर्यालोचनायां चानित्यत्वादवश्यंभावी तत्सद्भावः। तत्वपर्यालोचनायां तु सूत्रार्थोभयरूपत्वादागमस्यार्थापेक्षया नित्यत्वात्, सूत्ररचनापेक्षया त्वनित्यत्वात् कथंचित् कर्तृत्वसिद्धिः, तत्र सूत्रकर्तुरनंतरप्रयोजनं सत्त्वानुग्रहः परंपरं त्वपवर्गप्राप्तिः, उक्तं च "सर्वज्ञोक्तोपदेशेन यः सत्त्वानामनुग्रहं। करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवं ॥१॥ श्रोतॄणामनंतरप्रयोजनमावश्यकश्रुतस्कंधार्थपरिज्ञानं परं परं निःश्रेयसावाप्तिः। कथं इह ज्ञानक्रियाभ्यां मोक्षः, सम्यगवबोधपुरस्सरं सावद्यानवद्ययोगनिवृत्तिप्रवृत्तिभ्यां सवितुः खरकिरणैर्जलार्द्रशाटिकायाः सलिलकणानामिव कर्म्माणूनामनयवशोऽपगमसंभवात्, ज्ञानक्रियात्मकं चावश्यकं उभयस्वभावत्वात्, तयोश्च ज्ञानक्रिययोरवाप्तिर्विवक्षितावश्यकश्रुतस्कंधश्रवणतो जायते नान्यथा, तत्कारणत्वात्तदवाप्तेः, अन्यथा सम्यग्ज्ञानाभावतः शिष्याणां मोक्षपथप्रवृत्त्युच्छेदप्रसक्तेः, कारणादेव च कार्यसिद्धेः। ततः श्रोतॄणामपि परंपरया मुक्तिभावाद् भवति तेषां परंपरप्रयोजनं निःश्रेयसावाप्तिरिति प्रयोजनवानावश्यकप्रारंभप्रयासः। अभिधेयं सामायिकादि, तेषामेवास्मिन् ग्रंथे सविस्तरमभिधास्यमानत्वात्, सम्बन्धस्तु द्विधा उपायोपेयभावः गुरुपर्वक्रमलक्षणश्च, तत्राद्यस्तर्कानुसारिणः प्रति, तद्यथा—वचनरूपापन्नमावश्यकमुपायः उपेयं सामायिकादिपरिज्ञानं मुक्तिपदं वा, तस्याप्यतः पारंपर्येण भावात्, तथाहि अस्मात्सम्यक् सामायिकाद्यर्थज्ञानं भवति, सति च तस्मिन् सम्यग्दर्शनादिवैमल्यं क्रिया प्रयत्नश्च ताभ्यां च प्रकर्षप्राप्ताभ्यां मुक्तिप्राप्तिरिति।

गुरुपर्वलक्षणस्तु सम्बन्ध उपोद्घातनिर्युक्तौ "उद्देसे निद्देसे य निग्गमे" इत्यादिना ग्रन्थेन स्वयमेव निर्युक्तिकृता प्रपञ्चेन वक्ष्यते । सम्प्रति मङ्गलमुच्यते, तच्च मङ्गलं शास्त्रस्यादौ मध्येऽवसाने च । वक्ष्यते, ननु न युक्तो मङ्गलत्रयोपन्यासः, आदिमङ्गलेनैवाभिष्टार्थस्य सिद्धत्वात्, न, आदिमङ्गलमात्रेणाभीष्टार्थसिद्धयोगात्, तथाहि आदिमङ्गलं विनेयाः विवक्षितशास्त्रस्य पारङ्गच्छेयुरित्येवमर्थं मध्यमङ्गलमवगृहीतशास्त्रस्थिरीकरणार्थं, अन्त्यमङ्गलं शिष्यप्रशिष्यपरम्परया शास्त्रस्याव्यवच्छेदार्थं, तत्रादि मङ्गलं "आभिणिबोहिअनाण" मित्यादि ज्ञानपञ्चकस्य परममङ्गलत्वात् । मध्यमङ्गलं "वंदणचिइकिइकम्म" मित्यादि, वन्दनस्य विनयरूपत्वात्तस्याभ्यन्तरतपोभेदत्वात्तस्य च मङ्गलत्वात्, पर्यन्तमङ्गलं "पच्चक्खाण" मित्यादि, प्रत्याख्यानस्याद्यतपोभेदत्वेन मङ्गलत्वात् । तत्रादिमङ्गलमुच्यते, तच्च ज्ञानपञ्चकरूपं, यतः

आभिणिबोहियनाणं सुयनाणं चेवं ओहिनाणं च ।
तह मणपज्जवनाणं केवलनाणं च पंचमयं ॥१॥ नि०



गाथा—१

अर्थाभिमुखो नियतः प्रतिनियतस्वरूपो बोधोऽभिनिबोध एव विनयादित्वात् स्वार्थेकणि आभिनिबोधिकं, यद्वा भिनिबुध्यतेऽनेनास्मादस्मिन् इत्यभिनिबोधः, तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तं आभिनिबोधिकं, तच्चतज्ज्ञानं चेति समासः, इन्द्रियमनोनिमित्तो योग्यदेशावस्थितवस्तुविषय, स्फुटः प्रतिभासो बोधविशेष इत्यर्थः । श्रवणं श्रुतं वाच्यवाचकभावपुरस्सरीकारेण शब्दसंस्पृष्टार्थग्रहणहेतुरूपलब्धिविशेषः, एवमाकारकं वस्तु जलधारणार्थक्रियासमर्थं 'घट' शब्द-

वाच्यमित्यादिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामशब्दार्थपर्यालोचनानुसारी—इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः, अथवा श्रूयतेऽस्मादस्मिन्निति श्रुतं तदावरणकर्म्मक्षयोपशमस्तज्जनितं ज्ञानमपि श्रुतं कार्ये कारणोपचारात्, शृणोतीति वा श्रुतं आत्मा, तदनन्यत्वाज्ज्ञानमपि श्रुतं । चः अनयोः स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यात्तुल्यकक्षतोद्भावनार्थः, तथाहि य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्यापीति स्वामिसाधर्म्यं, तथा यावामेव मतेः स्थितिकालः तावानेव श्रुतस्यापि, तत्र प्रवाहापेक्षयाऽतीतानागतवर्तमानरूपः सर्व एव कालः, अप्रतिपतितैकजीवापेक्षया तु षट्षष्टिः सागरोपमाणि समधिकानि, उक्तं च "दो वारे विजया ईसु०" यथा च मतिज्ञानं क्षयोपशमहेतुकं तथा श्रुतमपि, यद्वा इन्द्रियानिन्द्रियनिमित्तमतिज्ञानं तथा श्रुतमपीति करणसाधर्म्यं, यथा मतिज्ञानमादेशतः सर्वद्रव्यादिविषयमेवं श्रुतमपि, यथा च मतिज्ञानं परोक्षमेवं श्रुतमपि, एवकार अवधारणे, स च परोक्षत्वमनयोरवधारयति, मतिश्रुते एव परोक्षे, नाशेषज्ञानमिति । अथ परोक्षमिति कः शब्दार्थः ?, उच्यते, 'अशुटि व्यासौ' अश्नुते, ज्ञानात्मना सर्वानर्थान् व्याप्नोतीत्यक्षः, अक्षस्य—आत्मनो द्रव्येन्द्रियाणि द्रव्यमनश्च पुद्गलमयत्वात्पराणि वर्तन्ते, पृथग् वर्तन्त इतिभावः, ताभ्यां यदस्य ज्ञानमुदयते तत्परोक्षं, पृषोदरात्वाद्रूपनिष्पत्तिः । यद्वा परैन्द्रियादिभिः सह उक्षा—सम्बन्धो विषयविषयिभावलक्षणो यस्मिन् ज्ञाने, न तु साक्षादात्मना, तत् परोक्षं, धूमादग्निज्ञानवत्, कथमनयोः परोक्षतेति, उच्यते, पराश्रयत्वात्, तथाहि पुद्गलमयत्वात् द्रव्येन्द्रियमनांस्यात्मना पृथग्भूतानि, ततस्तदाश्रयेणोपजायमानं ज्ञानमात्मनो न साक्षात्, किन्तु परंपरयेति, परोक्षता, वैशेषिकादयः प्राहुः—ननु अक्षाणि—इन्द्रियाण्युच्यन्ते ततोऽक्षाणां इन्द्रियाणां या साक्षादुपलब्धिः सा प्रत्यक्षं, अक्षं-इन्द्रियं प्रति वर्तते इति प्रत्यक्षं तथा च

मति लोकप्रसिद्धं साक्षादिन्द्रियाश्रितं घटादिज्ञानं प्रत्यक्षमिति सिद्धं, अयुक्तमेतत्, इन्द्रियाणामचेतनत्वोपलब्धृत्वाभावात्, तथा चात्र प्रयोगः—यदचेतनं तन्नोपलब्धृ यथा घटः, अचेतनानि च द्रव्येन्द्रियाणि, न चायमसिद्धो हेतुः, यतो द्रव्येन्द्रियाणि निर्वृत्त्युपकरणरूपाणि। "निर्वृत्त्युपकरणे द्रव्येन्द्रियमिति तत्त्वा०—२—१७ वचनात्, निर्वृत्त्युपकरणे च पुद्गलमये, पुद्गलमयं च सर्वमचेतनं, तत्त्वतः पुनस्तत्रात्मैवोपलब्धा, कथमिति चेदुच्यते, तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, तथाहि—कोऽपि पूर्वं चक्षुषा विवक्षितमर्थं गृहीतवान्, यतः कान्लातरे देवविनियोगतश्चक्षुषः अपगमेऽपि सति तमर्थं स्मरति, यदि चक्षुरेव द्रष्टृ स्यात्तत‍श्चक्षुषोऽभावे तदुपलब्धार्थस्मृतिर्न भवति, नहि आत्मना सोऽर्थोऽनुभूतः, किन्तु चक्षुषा, चक्षुष एव साक्षाद्द्रष्टृत्वेनाभ्युपगमात्, न चान्येनानुभूताऽन्यस्य स्मरणं स्यादतिप्रसंगात्, तस्मादात्मैवोपलब्धा, नेन्द्रियमिति। अवशब्दोऽधःशब्दार्थः, अव—अधोऽधो विस्तृत वस्तु धीयते—परिच्छिद्यतेऽनेन इति अवधिः, अथवाऽवधिः—मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः, अवधिश्चासौ ज्ञानं चेत्यवधिज्ञानं, चोऽनंतरोक्तज्ञानद्वयेन सहास्य स्थित्यादिभिः साधर्म्यदर्शनार्थः, तथाहि—यावानेव मतिश्रुतयोरनंतरोक्तः स्थितिकालोऽवधेरपि द्विधापि तावानेव, यथैव च मतिश्रुते मिथ्यादर्शनोदयतो विपर्ययरूपतामासादयतस्तथाऽवधिरपि, तथाहि—मिथ्यादृष्टेस्तान्येव मतिश्रुतावधिज्ञानानि मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानानि भवन्तीति विपर्ययसाधर्म्यं, यश्च मतिश्रुतयोः स्वामी स एवावधेरपीति स्वामिसाधर्म्यं, तथा विभङ्गज्ञानिनस्त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपदेव मतिश्रुतावधिज्ञानानां लाभसंभव इति लाभसाधर्म्यं तथा परिः—सर्वतो भावे, अवनमवः, औणादि-

कोऽप्रत्ययः, परि अवो—वेदनं पर्यवः, मनसि मनसो वा पर्यवो मनःपर्यवः सर्वतो मनोद्रव्य परिच्छेद इत्यर्थः, अथवा मनःपर्यय इति पाठः, तत्र पर्ययणं पर्यायो, भावेऽल्प्रत्ययः, मनसि मनसा वा पर्यया मनःपर्ययः, सर्वतस्तत्परिच्छेदः स चासौ ज्ञानं च मनःपर्ययज्ञानं वा, मनपर्ययःज्ञानं अपरे मणपज्जयनाणमिति पाठे मनःपर्यायज्ञानमिति शब्दसंस्कारमाचक्षते, कर्मणोऽणित्यणि, मनःपर्यायं च तत् ज्ञानं च मनःप०, यद्वा मनसः पर्यायाः, पर्याया—भेदा इत्यर्थः मनःपर्यायाः तेषां तेषु वा सम्बन्धि ज्ञानं, मनःपर्यायज्ञानं इदं चार्धतृतीयद्वीपसमुद्रान्तरवर्त्तिसंज्ञिमनोद्रव्यालंबनमेव तथा शब्दोऽवधिज्ञानेन सहास्य छद्मस्थत्वादिभिः सारुप्यप्रदर्शनार्थः, तथाहि, यथाऽवधिः छद्मस्थस्य स्यात् तथेदमपि, यथावाऽवधिज्ञानं रूपिद्रव्यगोचरं तथेदमपि, अस्य मनःपुद्गलालंबनत्वात्, यथा चाऽवधिः क्षायोपशमिके भावे तथा प्रस्तुतमपीति भावसाधर्म्यं, यथा चावधिज्ञानं प्रत्यक्षं तथा मनःपयार्यज्ञानमपि, तथाहि—अक्षं—जीवं प्रति साक्षाद्वर्तते यद् ज्ञानं तत् प्रत्यक्षं, तच्चावध्यादि त्रिभेदमिति, प्रत्यक्षसाधर्म्यं। केवलं एकमसहायं मत्यादिज्ञाननिरपेक्षत्वात्, मत्यादिज्ञाननिरपेक्षता च केवलज्ञानप्रादुर्भावे मत्यादीनामसंभवात्, ननु कथं तदसंभवः, यावता मतिज्ञानादीनि स्वस्वावरणक्षयोपशमे एव प्रादुष्षन्ति, ततो निर्मूलस्वस्वावरणविलये तानि सुतरां भविष्यन्ति, चारित्रपरिणामवत्, उच्यते, यथा जात्यमरकतादिमणिर्मलोपदिग्धस्य यावन्न समूलमलापगमस्तावद्यथा २ देशतो मलविलयस्तथा तथा देशतो व्यक्तिर्जायते, सा च क्वचित् कदाचित् कथंचिद्भवतीत्यनेकविधा, तथाऽऽत्मनोऽपि सकलज्ञानात्मकस्याप्यावरणमलपटलतिरोहितस्य यावन्न सकलकर्ममलापगमस्तावद्यथा यथा देशतः कर्ममलोच्छेदस्तथा तथा देशतस्तस्य

विज्ञप्तिरुल्लसति, सा च क्वचित् कदाचित्कथंचित्यनेकविधा, ततो यथा मरकतादिमणेरशेषमलापगमे समस्तास्पष्टदेशशक्तिव्यवच्छेदेन परिस्फुटरुपैका व्यक्तिर्जायते तथाऽऽत्मनोऽपि ज्ञानदर्शनचारित्रप्रभावतो निश्शेषावरणप्रहाणादशेषदेशज्ञानव्यच्छेदेन एकरूपाऽतिपरिस्फुटा विज्ञप्तिरुल्लसति, ततो मत्यादिनिरपेक्षं केवलज्ञानं अथवा शुद्धं–केवलं, तदावरणकमलकलंकस्यावयवशोऽपगमात्, सकलं वा-केवलं, प्रथमत एव तदावरणविगमतः संपूर्णोत्पत्तिः, असाधारणं वा केवलमनन्यसदृशत्वात्, अनंतं वा केवलं ज्ञेयानंतत्वात्, केवलं च तज्ज्ञानं च केवलज्ञानं, चशब्द उक्तसमुच्चयार्थः, अथवा मनःपर्यायज्ञानसारूप्यप्रदर्शक एव अप्रमत्तयतिस्वामिसाधर्म्याद्विपर्ययाभावयुक्तत्वाच्च, पंचममेव पञ्चमकं, प्राकृतत्वात् स्वार्थे कः ॥ ननु सकलमपीदं ज्ञानं ज्ञप्त्येकस्वभावं ततो ज्ञप्त्येकस्वभावत्वाविशेषे किंकृत एष आभिनिबोधिकादिभेदः, ज्ञेयभेदकृत इति चेत्, तथाहि-वर्तमानिक वस्त्वाभिनिबोधिकस्य विषयः. त्रिकालसाधारणसमानपरिणामो ध्वनेर्गोचरः श्रुतस्य, रूपिद्रव्याणि अवधेः, मनोद्रव्याणि मनःपर्यायस्य, समस्तपर्यायान्वितं सर्वं वस्तु केवलज्ञानस्य, तदेतदयुक्तं, एवं सति केवलज्ञानस्य भेदबाहुल्यप्रसक्तिः, तथाहि–ज्ञेयभेदाज्ज्ञानस्य भेदः, यानि च ज्ञेयानि प्रत्येकमाभिनिबोधिकप्रभृतिज्ञानानामिष्यन्ते तानि सर्वाण्यपि केवलज्ञाने विद्यन्ते, अन्यथा केवलज्ञानेन तेषामग्रहणप्रसंगात्, अथ उच्यत प्रतिपत्तिप्रकारभेदतः आभिनिबोधिकादिभेदः, तथाहि न यादृशी प्रतिपत्तिराभिनिबोधिकस्य तादृशी श्रुतस्य, किन्त्वन्यादृशी एवमवध्यादि ज्ञानानामपि प्रतिपत्तव्यं, ततो भवत्येव प्रतिपत्तिभेदाज्ज्ञानभेदः, तदप्ययुक्तं, एवं सत्येकस्मिन्नपि ज्ञानेऽनेकभेदप्रसक्ते, तथाहि तत्तद्देशकालस्वरूपभेदेन विविच्यमानमेकैकं ज्ञानं प्रतिपत्तिप्रकारा-

गाथा–
॥७॥

नत्य प्रतिपद्यते, तत् नयोऽपि पक्षः श्रेयान्, स्यादेतद्–अस्यावारकं कर्म, तच्चानेकप्रकारं, ततस्तावत्तदावार्यं ज्ञानमप्यनेकप्रकारतां प्रतिपद्यते, ज्ञानावारकं च कर्म्म, पंचधा, प्रज्ञापनादौ तथाभिधानात्, ततो ज्ञानमपि पंचधा प्ररूप्यते, तदतीवायुक्तिसंगतं, यतः आवार्यापेक्षमावारकं, अतः आवार्यभेदादेव तद्भेदः, नतु तद्भेदादावार्यभेदः, आवार्यं च ज्ञप्तिरूपापेक्षया सकलमप्येकम्, ततः कथमावारकस्य पंचरूपता ? येन तद्भेन ज्ञानस्यापि पंचधा भेद उद्गीर्येत ?, अत्र प्रतिविधीयते, अथ यच्चावदुक्तं 'सकलमपीदं ज्ञानं ज्ञप्त्येकस्वभावमिति, तत्र ज्ञप्त्येकस्वभावता किं सामान्येनाभ्युपगम्यते विशेषतो वा ?, तत्र नाद्यः पक्षः क्षतिमाधत्ते, सिद्धसाध्यतया तस्य बाधकत्वायोगात् बोधरूपतारूपसामान्यापेक्षया सकलमपीदं ज्ञानमस्माभिरेकमभ्युपगम्यते एव, ततः का नो हानिरिति ? अथ द्वितीय पक्षस्तदयुक्तमसिद्धत्वात् नहि नाम विशेषतोऽज्ञानमेकमेवोपलभ्यते, प्रतिप्राणि स्वसंवेदन प्रत्यक्षेणोत्कर्षापकर्षकृतभेददर्शनात्, अथ यद्युत्कर्षापकर्षकृतमात्रभेददर्शनाज्ज्ञानभेदस्तर्हि तावुत्कर्षापकर्षौ प्रतिप्राणि देशकालाद्यपेक्षया सहस्रशो विद्यते, ततः कथं पंचरूपता ?, नैष दोषः, परिस्थूरनिमित्तभेदतः पञ्चधात्वस्य प्रतिपादनात्, तथाहि–सकलघातिकर्मक्षयो निमित्तं केवलज्ञानस्य, आमर्षौषध्यादिलब्धियुक्तसंयतस्य प्रमादलेशेनाप्यकलंकितो विशिष्टो विशिष्टाध्यवसायानुगतोऽप्रमादो मनःपर्यवस्य, अनिन्द्रियरूपिद्रव्यसाक्षादवगमनिबंधनक्षयोपशमविशेषोऽवधिः मतिश्रुतयोस्तु लक्षणभेदादिकं, तच्चाग्रे वक्ष्यामः, यदप्युक्तं 'ज्ञेयभेदकृत' इत्यादि तदपि अनभ्युपगमादेवापास्तं नहि वयं ज्ञेयभेदमात्रतो ज्ञानभेदमिच्छामः, एकेनाप्यवग्रहादिना बहुबहुविधवस्तुग्रहणोपलंभात्, यदपि च प्रत्ययादि 'प्रतिपत्तिप्रकारभेदकृत' इत्यादि,

तदपि न नो बाधायै, यतस्ते प्रतिपत्तिप्रकारा देशकालभेदेनानन्त्यनपि प्रतिपद्यमाना परिस्थूरनिमित्तभेदेन व्यवस्थापिता नाभिनिबोधिकादीन् जातिभेदान्नतिक्रामन्ति, ततः कथमेकस्मिन् अनेकभेदभावप्रसङ्गः?, यदप्यवादि—आवार्यपेक्षं ह्यावारकं इत्यादि, तदपि न बाधायै, यतः परिस्थूरनिमित्तभेदतः पञ्चसंख्याः, ततस्तदपेक्षमावारकमपि पञ्चधा वर्णितमिति न कश्चिद्दोषः, न चैवमात्मस्वभावत्वे क्षीणावरणस्यापि तद्भावप्रसङ्गः, यत एते मतिज्ञानावरणादिक्षयोपशमरूपोपाधिसंपादितसत्ताकाः, यथा सूर्यस्य घनपटलावृत्तस्य मन्दप्रकाशभेदाः कटकुडयावरणविवरभेदोपाधिसम्पादिताः, ततः कथं निश्शेषावरणक्षयात् तथारूपक्षयोपशमभाविनो भवितुमर्हन्ति, न खलु सकलघनपटलकटकुडयाद्यावरणापगमे सूर्यस्य ते तथारूपा मन्दप्रकाशभेदा भवन्ति, ततो यथाजन्मादयो भावा, जीवस्यात्मभूता अपि कर्म्मोपाधिसंपादितसत्ताकत्वात् तदभावे न भवन्ति तद्वदाभिनिबोधिकादयोऽपि भेदा ज्ञानस्यात्मभूतापि मतिज्ञानावरणादिक्षयोपशमसापेक्षत्वात्केवलिनो न स्युः ततो नासर्वज्ञत्वदोषः । अन्यस्त्वाह प्रपन्ना वयमुक्तयुक्तितो ज्ञानस्य पञ्चभेदत्वं, परममीषां भेदानामित्थमुपन्यासे किं विवक्षितं प्रयोजनमुत यथाकथंचिदेष प्रवृत्तः?, अस्तीति ब्रूमः ।

इह मतिश्रुते तावदेकत्र वक्तव्ये, परस्परमनयोः स्वाम्यादिसाधर्म्यात्, तच्च प्रागेव भावितं, अवध्यादिज्ञानेभ्यश्च प्राक् तद्भाव एवावध्यादिज्ञानसद्भावात्, सर्वत्रापि पूर्वमवग्रहादिरूपं मतिज्ञानमुदयते पश्चात्, श्रुतज्ञानं नन्वेते—मतिश्रुते सम्यक्त्वोत्पादनकाले युगपदुत्पत्तिमासादयतः, अन्यथा मतिज्ञानाभावे श्रुतज्ञानभावप्रसङ्गः, स चानिष्टः, तथा मिथ्यात्वप्रतिपत्तौ युगपदेवाज्ञानरूपतया परिणमेते, ततः कथं 'मतिपूर्वं श्रुत'मिति?, नैष दोषः, यतः सम्यकत्वो-

त्पादनकाले समकालं मतिश्रुते लब्धिमात्रमेवांगीकृत्य प्रोच्येते उपयोगापेक्षया, न खलु मत्युपयोगेनासंचित्य श्रुतग्रंथानुसारिविज्ञानमासादयति जन्तुः, ततो न कश्चिद्दोषः । अथ मतिश्रुतयोः किंकृतो भेदः ? उच्यते लक्षणभेदादिकृतः, उक्तं च "लक्खणभेआ हेउफलभेआओ" भेअं इंदियविभागो । वागकूखरमूएअरभेआ भेआ मइसुआणं ॥१॥" तत्र लक्षणभेदा[illegible] भाव्यते, अभिमुखं योग्यदेशावस्थितं नियतमर्थं इन्द्रियमनोद्वारेणात्मा येन परिणामविशेपेणावबुध्यते स परिणामविशेपो ज्ञानापरपर्याय आभिनिबोधिकं, शृणोति वाच्यवाचकपुरस्सरं श्रवणविपयेण शब्देन सह संस्पृष्टमर्थं परिच्छिनत्ति येन परिणामविशेषेण आत्मा स परिणामविशेपः श्रुतं, अयं च लक्षणभेदो नंद्यध्ययने साक्षादुक्तः, ननु यद्येवं लक्षणं श्रुतं तर्हि य एव श्रोत्रेन्द्रियलब्धिमान् भापालब्धिमान् वा तस्यैव श्रुतमुपपद्यते, न शेपस्यैकेन्द्रियस्य, तथाहि यः श्रोत्रन्द्रियलब्धिमान् भापालब्धिमान् वा स विवक्षितं शब्दं श्रुत्वा तेन शब्देन वाच्यमर्थं प्रतिपत्तुमिष्टे न शेपः, तस्य तथारूपशक्त्यभावात्, योऽपि च भाषालब्धिमान् भवति द्वीन्द्रियादिः सोऽपि प्रायः स्वचेतसि किमपि विकल्प्य तदभिमानतः शब्दमुद्गिरति, नान्यथा, ततस्तस्यापि श्रुतं संभाव्यते, यस्त्वेकेन्द्रियः स न श्रोत्रेन्द्रियलब्धिमान् नापि भापालब्धिमान् ततः कथं तस्य श्रुतमुपपद्यते ?, अथ प्रवचने तस्यापि श्रुतं वर्ण्यते, ततः प्रागुक्तं श्रुतलक्षणं न सम्यगिति, नैष दोषः, इह तावदेकेन्द्रियणामाहारादिसंज्ञा विद्यन्ते, तथा सूत्रे नैकशोऽभिधानात्, संज्ञा चाभिलाप उच्यते, यदुक्तमस्यैवावश्यकस्य मूलटीकाय-आहारसंज्ञाऽऽहाराभिलापः, क्षुद्वेदनीयप्रभवः खल्वसौ परिणामविशेप इति, अभिलापश्च ममैवंरूपं वस्तु पुष्टिकारि, तद्यदीदमवाप्यते ततः समीचीनं भवति इत्येवं शब्दार्थोल्ले-

स्वानुविद्धः स्वपुष्टिनिमित्तप्रतिनियतवस्तुप्राप्त्यध्यवसायः, स च श्रुतमेव, तस्य शब्दार्थपर्यालोचनात्मकत्वात्, शब्दार्थपर्यालोचनात्मकता च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते इत्येवमादीनां शब्दानाम-तर्जल्पाकाररूपाणां विवक्षितार्थवाचकतया प्रवर्तमानत्वात्, तत एकेन्द्रियाणां किंचनाप्यनिर्वचनीयं तथारूपक्षयोपशमभावतो वाच्यवाचकभावपुरस्सरं शब्दसंस्पृष्टार्थग्रहणं ज्ञेयं, अन्यथाऽऽहारादिसंज्ञानुपपत्तेः, तथा यो भाषाश्रोत्रेन्द्रियलब्धिमान् तस्यैव श्रुतमुपपद्यते इत्यादि तदप्युक्तं, बकुलादीनां स्पर्शनेन्द्रियातिरिक्तद्रव्येन्द्रियलब्धिविकलत्वेऽपि किमपि सूक्ष्मभावेन्द्रियपञ्चकविज्ञानमभ्युपगम्यते, "पंचिदिउओव्व बउलो" इत्यादि भाष्यकारवचनप्रामाण्यात्, तथा भाषाश्रोत्रेन्द्रियलब्धिविकलत्वेऽपि तेषां सूक्ष्मं किमपि श्रुतं भविष्यति अन्यथाऽऽहारादिसंज्ञानुपपत्तेः, समीचीनं प्रागुक्तं श्रुतलक्षणमिति भवति लक्षणभेदाद्भेदः, तथा हेतुफलभेदात्, तथाहि—मतिः कारण, मत्या प्राप्यमाणत्वात्. श्रुतं तु कार्यं, न खलु मतिपाटवमंतरेण श्रुतविभवमुत्तरोत्तरमासादयति जन्तुस्तथाऽदर्शनात्, यद्यदुत्कर्षापकर्षवशादुत्कर्षापकर्षभाक् तत्तस्य कारणं—यथा घटस्य मृत्पिण्डः, मत्युत्कर्षापकर्षवशाच्च श्रुतस्योत्कर्षापकर्षा ततः कारणं मतिः श्रुतस्य, तथा भेदभेदाद्भेदः, तथाहि चतुर्धा व्यञ्जनावग्रहः षोढाऽर्थावग्रहेहावायधारणाभेदादष्टाविंशतिधाऽभिनिबोधिकं ज्ञानं, अङ्गप्रविष्टानंगप्रविष्टादिभेदभिन्नं च श्रुतं, तथेन्द्रियविभागाद्भेदः, श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव । ननु श्रोत्रेन्द्रियोपलब्धिः श्रुतमेव कस्मादिति चेदुच्यते, इह या श्रोत्रेन्द्रियोपलब्धिरपि श्रुतग्रन्थानुसारिणी सैव श्रुतमुच्यते, या पुनरवग्रहेहावायरूपा या सा मतिः, शेषं यच्चक्षुरादीन्द्रियोपलब्धिरूपं विज्ञानं तन्मतिज्ञानं, तदेवं सर्वस्याः श्रोत्रेन्द्रियोपलब्धेरुत्सर्गेण श्रुतत्वे प्राप्तेऽपवादमाह—मुक्त्वा

गाथा—

॥११॥

द्रव्यश्रुतं—पुस्तकपत्रकादिन्यस्ताक्षररूपद्रव्यश्रतविषयां शब्दार्थपर्यालोचनात्मिकां शेपेन्द्रियोपलब्धिं, तस्याः श्रुतरूपत्वात् यश्च द्रव्यश्रुतव्यतिरेकेणान्योऽपि शेपेन्द्रियेभ्यक्षरलाभः शब्दार्थपर्यालोचनात्मकः सोऽपि श्रुतं, नतु केवलोक्षरलाभः, केवलो ह्यक्षरलाभो मतावपीहादिरूपायां भवति, न च श्रुतं, वल्कसमं मतिज्ञानं, कारणत्वात्, शुम्बसमं श्रुतं तत्कार्यत्वात्, यथा वल्कशुम्बयोर्भेदस्तथा मतिश्रुतयोरपि, इतश्च भेदो मतिज्ञानमनक्षरं साक्षरं च, तथाहि—अवग्रहज्ञानमनक्षरं, तस्यानिर्दिश्यसामान्यमात्रप्रतिभासात्मकतया निर्विकल्पकत्वात्, ईहादिज्ञानं तु साक्षरं, तस्य परामर्शादिरूपतयाऽवश्यं वर्णारूपित्वात्, श्रुतं साक्षरमेव, अक्षरमंतरेण शब्दार्थपर्यालोचनाऽयोगात्, इतश्च मतिश्रुतयोर्भेदः— मूककल्पं मतिज्ञानं, स्वमात्रप्रत्यायनफलत्वात्, अमूककल्पं श्रुतं, स्वपरप्रत्यायकत्वादिति। मतिश्रुतानंतरं च कालविपर्ययादिसाधर्म्यादवधेरुपन्यासः, तदनंतरं च छद्मस्थविषयभावादिसाधर्म्यान्मनःपर्यायोपन्यासः, तदनंतरं च भावमुनिस्वाम्यादिसाधर्म्यात्सर्वोत्तमत्वाच्च केवलोपन्यासः, आभिनिबोधिकं द्विधा-श्रुतनिश्रितमश्रुतनिश्रितं च, तत्र शास्त्रपरिकर्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनमनपेक्ष्यैव यदुपजायते तत् श्रुतनिश्रितमवग्रहादि, यत्पुनः सर्वथा शास्त्रसंस्पर्शरहितस्य तथाविधक्षयोपशमभावात्, एवमेव यथाऽवस्थितवस्तुसंस्पर्शि मतिज्ञानमुपजायते तदश्रुतनिश्रितमौत्पत्त्यादि, तत्र श्रुतनिश्रितमतिज्ञानस्वरूपदर्शनायाह—

उग्गह ईहाऽवाआ य धारणा एव हुंति चत्तारि।
अभिणिबोहियनाणस्स भेयवत्थू समासेणं ॥२॥

अवग्रहणमवग्रहः, अनिर्दिश्यसामान्यमात्ररूपार्थग्रहणमित्यर्थः, ईहनमीहा, सद्भूतार्थपर्यालोचनचेष्टा, किमुक्तं भवति? अवग्रहादुत्तरकालमवायात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषपरित्यागाभिमुखः,प्रायोऽत्र मधुरत्वादयः शांखादिशब्दधर्मा दृश्यन्ते, न निष्ठुरतादयः, शांर्गादिशब्दधर्मा इत्येवं मतिविशेष ईहा, तस्यैवावगृहीतस्येहितस्य चार्थस्य निर्णयरूपोऽध्यवसायः शंख एवायं शार्ङ्ग एवायमित्यादिरूपोऽवधारणात्मकप्रत्ययोऽपायः, च शब्दः पृथक् पृथगवग्रहाहादिस्वरूपस्वातंत्र्यदर्शनार्थः, अवग्रहादीनामीहादयः पर्यायां न भवन्तीत्यर्थः, तस्यैवार्थस्य निर्णीतस्य धरणं धारणा, सा च त्रिधा अविच्युतिर्वासनास्मृतिश्च, तत्र तदुपयोगादविच्यवनमविच्युतिः, सा चान्तर्मुहूर्तप्रमाणा, ततस्तयाऽऽहितो यः संस्कारः स वासना सा संख्येयमसंख्येयं वा कालं यावद्भवति, संख्येयवर्षायुषां संख्येयं कालं, असंख्येयवर्षायुषां चासंख्येयमित्यर्थः, ततः कालन्तरे कुतश्चित्तादृशार्थदर्शनादिकात् कारणात् संस्कारस्य प्रबोधे यज्ज्ञानमुदयते तदेवेदं यन्मया प्रागुपलब्धमित्यादिरूपं सा स्मृतिः, एताश्चाविच्युतिवासनास्मृतयो धरणलक्षणसामान्याऽन्वर्थयोगाद् धारणाशब्दवाच्याः एवंशब्दः क्रमदर्शनार्थः, आर्षत्वाच्च मकारलोपः, एवमनेनैव क्रमेण, तथाहि—नानवगृहीतमीह्यते, नत्वनीहितमवगम्यते, न चानवगतं धार्यते इति, चत्वार्याभिनिबोधिकस्य भिद्यन्ते इति भेदाः—विकल्पास्त एव वस्तुनि भेदवस्तूनि, वास्तवभेदा इति भावः, समासेन—संक्षेपेण, विस्तरतस्त्वष्टाविंशत्यादिभेदभावात् । अनंतरोपन्यस्तानामवग्रहादीनां स्वरूपं प्रतिपादयिषुरिदमाह—

अत्थाणं ओगहणंमि उग्गहो तह वियारणे ईहा ।
ववसायंमि अवाओ धरणंमिय धारणं बिंति ॥३॥

अर्यंते—गम्यंते, परिच्छिद्यन्त इत्यर्थाः, स्वरूपादयस्तेषामर्थानां प्रथमं दर्शनानंतरं ग्रहणमवग्रहणमवग्रहं ब्रुवते इति योगः। ननु वस्तुनः सामान्यविशेषात्मकतयाऽविशिष्टत्वात्किमिति प्रथमं दर्शनं न ज्ञानमिति ?, उच्यते, तस्य प्रबलावरणाच्चा-दर्शनस्याल्पावरणत्वात्, स च द्विधा—व्यंजनावग्रहोऽर्थावग्रहश्च, तत्र व्यंजनावग्रहपूर्वकोऽर्थावग्रह इति व्यंजनावग्रहः प्रथमं प्रतिपाद्यते, व्यंज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यंजनं, तच्चोपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां च यः परस्परं संबंधः, संपृक्तिरित्यर्थः, संबंधे हि सति सोऽर्थः श्रोत्रादींद्रियेण व्यक्तुं, शक्यते, नान्यथा, ततः संबंधो व्यजनं, व्यंजनेन संबंधेनावग्रहणं संबंध्यमानस्य शब्दादिरूपस्यार्थस्याव्यक्तरूपः परिच्छेदो व्यंजनावग्रह इति, अथवा व्यंज्यते इति व्यंजनानि, कर्मण्यनट्, व्यंजनानां शब्दादिरूपतया परिणतानां द्रव्याणां उपकरणेन्द्रियसंप्राप्तानामवग्रहः अव्यक्तरूपः परिच्छेदो व्यंजनावग्रहः, अथवा व्यंजनमुपकरणेन्द्रियं, शब्दादिपरिणतद्रव्यसंघातो वा, ततश्च व्यंजनेन—उपकरणेन्द्रियेण शब्दादिपरिणतद्रव्याणां च व्यंजनानामवग्रहो व्यंजनावग्रहः, स चान्तर्मुहूर्त्तप्रमाणः,

ननु व्यंजनावग्रहवेलायां न किमपि संवेदनं संवेदयामहे तत्कथमसौ ज्ञानरूपो गीयते ?, उच्यते, अव्यक्तत्वात् न संवेद्यते, ततो न कश्चिद्दोषः, अस्तित्त्वे किं प्रमाणमिति चेदुच्यते, अनुमानं, तथाहि—यदि प्रथमसमयेऽपि शब्दादिपरिणतद्रव्याणामुपकरणेन्द्रियस्य च परस्परसंपृक्तौ काचिदपि ज्ञानमात्रा न भवेत्तता द्वितीयेऽपि समये न स्यात्,

विशेषाभावात्, एवं यावच्चरमसमयेऽपि, अथ चरमसमयेऽर्थावग्रहरूपज्ञानं जायमानमुपलभ्यते, ततः प्रागपि कापि कियती मात्रा प्रतिपत्तव्या, यथा—सिकताकणे तैलं नास्ति ततः समुदायेऽपि नोपलभ्यते, अस्ति च चरमसमये प्रभूतशब्दादिसंपर्के ज्ञानं ततः प्राक्तनेषु समुदायेषु स्तोकं स्तोकतरं ज्ञेयं, अन्यथा चरमसमयेऽपि न स्यात्, ततः स्थितमेतद् व्यंजनावग्रहो ज्ञानरुपः, परं तद् ज्ञानमव्यक्तं ज्ञेयं, स चतुर्विधस्तद्यथा—श्रोत्रेन्द्रियव्यंजनावग्रहः, घ्राणेन्द्रियव्यं० जिह्वेन्द्रियव्यं० स्पर्शनेन्द्रियव्यं—

ननु पंचस्विन्द्रियेषु सत्सु षष्ठे च मनसि कस्मादयं चतुर्विधः ?, उच्यते,इह व्यंजनमुपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां च परस्परं संबंध उच्यते, संबधश्चतुर्णामेव श्रोत्रेन्द्रियादीनां, न नयनमनसोः, तयोऽरप्राप्यकारित्वात्, कथमप्राप्यकारितेति चेदुच्यते. विषयकृतानुग्रहोपघाताभावात्, यदि पुनः प्राप्तमर्थं चक्षुर्मनो वा गृह्णीयात्तर्हि यथा स्पर्शनेन्द्रियं स्रक्चंदनादिकमंगारादिकं च प्राप्तमर्थं परिच्छिन्दत्तत्कृतानुग्रहोपघातभाग् भवति तथा चक्षुर्मनसी अपि भवतां, न च भवतः, तस्मादप्राप्यकारिणीति, ननु चक्षुषोऽनुग्रहोपघातौ शशांकसूर्यविलोकनात्, एतज्जाड्यविलसितं, यतो वयं न ब्रूमः सर्वथा चक्षुषोऽनुग्रहोपघातौ न भवतः, किन्तु विषयमप्राप्तं चक्षुर्गृहणाति इत्येवाभिदध्महे, विषयकृतानुग्रहोपघातासंभवेऽपि तत्परिच्छेदभावात्, प्राप्तेन तूपघातकेनोपघातो भविष्यति, अनुग्राहकेण चानुग्रहः तत्रांशुमालिकिरणाः सर्वत्रापि प्रसरंति नात्र विसंवादः, ततस्ते चक्षुःप्राप्ताः संतः स्पर्शनेन्द्रियमिव चक्षुरप्युपघ्नन्ति, शीतांशुरश्मयस्तु स्वभावत एव शीतलत्वादनुग्राहकास्ततस्ते चक्षुरनुगृह्णन्ति, तरंगमालासंकुलजलावलोकने (पा० च जलकण-

सम्पृक्तसमीरणावयवसंस्पर्शतोऽनुग्रहः, शाड्वलतरुमण्डलवलोकनेऽपि शाड्वलतरुच्छायासंपर्कशीतीभूतसमीरणसंस्पर्शात्, शेषकालं तु जलाद्यवलोकने) अनुग्रहाभिमान उपघाताभावादध्यवसेयः, भवति चोपघाताभावेऽनुग्रहाभिमानो यथाऽतिसूक्ष्माक्षरनिरीक्षणाद्विनिवृत्य यथासुखं नीलीरक्तवस्त्राद्यवलोकने, इत्थं चैतदङ्गीकर्तव्यं, अन्यथा सम्पर्के यथा सूर्येणोपघातो भवति तथा हुतवहजलशूलाद्यालोकने दाहक्लेदपाटनादयोऽपि कस्मान्न भवन्ति ?, अपि च यदि चक्षुः प्राप्यकारि तर्हि स्वदेशगतं रजोमलाञ्जनादि किं न पश्यति ?, तस्मादप्राप्यकार्येव चक्षुः, ननु यदि चक्षुरप्राप्यकारि तर्हि कस्मादविशेषेण सर्वानप्यर्थान् न गृह्णाति ?, यदि हि प्राप्तं परिच्छिन्द्यात् तर्हि यदेवानावृतमदूरदेशं वा तदेव गृह्णीयात्, नावृतं दूरदेशस्थं वा, तत्र नयनरश्मीनां गमनासंभवात् सम्पर्काभावात्, ततो युज्येते चक्षुषो ग्रहणाग्रहणे नान्यथा ।

तथा चोक्तम् 'प्राप्यकारि चक्षुः उपलब्ध्यानुपलब्ध्योरनावरणेतरापेक्षणात् दूरेतरापेक्षणाच्च, यदि हि चक्षुरप्राप्यकारि भवेत् तदा आवरणभावादनुपलब्धिरन्यथोपलब्धिरिति च न स्यात्, नहि तदावरणमुपघातकरणसमर्थं, प्राप्यकारित्वे तु मूर्तद्रव्यप्रतिघातादुपपत्तिमान् व्याघातोऽतिदूरे च गमनाभावादिति, प्रयोगश्चात्र चक्षुषो विषयपरिमाणं प्राप्यकारित्वान्मनोवत्, तदेतदयुक्ततरं, दृष्टान्तस्य साध्यविकलत्वात्, न खलु मनोऽप्यशेषान् विषयान् गृह्णाति, तस्यापि सूक्ष्मेष्वगमगम्यादिष्वर्थेषु मोहदर्शनात्, ततो यथा मनोऽप्राप्यकार्यपि स्वावरणक्षयोपशमसापेक्षत्वान्नियतविषयं तथा चक्षुरपि स्वावरणक्षयोपशमसापेक्षत्वात् योग्यदेशावस्थितनियतविषयमिति न व्यवहितानामुपलम्भप्रसङ्गो नापि

दूरदेशस्थितानामिति, एवं मनसोऽप्यप्राप्यकारित्वं भाव्यं, तत्रापि विषयकृतानुग्रहोपघाताभावात्, अन्यथा तोयादि-चिन्तायामनुग्रहोऽग्निशस्त्रादिचिन्तायां चोपघातो भवेत्, ननु दृश्यते हर्षादिभिर्मनसोऽतिपुष्टता तद्वशाच्च शरीरोपचयः, उपघातश्च दृश्यते अतिशोककारणात् मनसोविघातसंभवस्तद्वशाच्च शरीरदौर्बल्यं, चिन्तावशाच्च हृद्राग इति, तदेतद-तीवासंबद्धं, यत इह मनसोऽप्राप्यकारित्वं साध्यमानं वर्त्तते, विषयकृतानुग्रहोपघाताभावादिति हेतोः, न चेह विषयकृतानुग्रहोपघातौ त्वया दृश्यते तत्कथं व्यभिचारः?, मनस्तु स्वयं पुद्गलमयत्वात् शरीरस्यानुग्रहोपघातौ करिष्यति, यथेष्टानिष्टरूप आहारः, तथाहि—

इष्टः आहारः परिभुज्यमानः शरीरस्य पोषणमाधत्ते, अनिष्टस्तूपघातं, तथा मनोऽप्यनिष्टपुद्गलोपचितमति-शोकादिनिबन्धनं शरीरस्य हानिमादधाति, इष्टपुद्गलोपचितं च हर्षादिकारणं पुष्टिं, तस्मान्मनोऽपि विषयकृतानुग्रहो-पघाताभावादप्राप्यकारीति चतुर्धा व्यंजनावग्रहः। तथा व्यंजनावग्रहचरमसमयोपात्तशब्दाद्यर्थावग्रहणलक्षणोऽर्थावग्रहः, सामान्यमात्रानिर्देश्यमग्रहणमेकसामायिकमर्थावग्रह इति भावः, तथेत्यानन्तर्ये, विचारणं—पर्यालोचनमर्थानामित्यनुवर्तते, ईहनमीहा, तां ब्रुवते इति योगः, किमुक्तं भवति? अवग्रहादुत्तीर्णोऽपायात्पूर्वः सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भू-तार्थविशेषपरित्यागाकाङ्क्षी मतिविशेष इति, विशिष्टोऽवसायो निश्चयोऽवगम इत्यनर्थान्तरं व्यवसायम्, अर्थानामिति वर्तते अवायं ब्रुवते इति संसर्गः, अयमर्थः— शांख एवायं शब्द इत्याद्यवधारणात्मकप्रत्ययोऽवायः, चोऽवधारणे, व्य[illegible]यमेवायं ब्रुवते इति धृतिर्धारणम्, अर्थानामिति वर्तते, परिच्छिन्नस्य वस्तुनोऽविच्युतिवासनास्मृतिरूपं धरणं

पुनर्धारणं ब्रुवते, पुनः शब्दोऽप्येवार्थः, ब्रुवत इत्यनेन शास्त्रपारतंत्र्यमाह—इत्थं तीर्थंकरगणधरा ब्रुवत इति, अर्थाव-ग्रहेहावायधारणाः पञ्चस्विन्द्रियेषु षष्ठे च मनसि भावात् प्रत्येकं षड्भेदात्मका चतुर्धा व्यञ्जनावग्रह इति सर्वसंकल-नयाऽष्टाविंशतिभेदभिन्नमाभिनिबोधिकं ज्ञानमवगन्तव्यं, नवरमीहा सद्दशधर्मोपेतवस्तुविषयेति, नयनादिनिबन्धनेहाविषया यथाक्रमं स्थाणुपुरुषादिकुष्ठोत्पलादिसम्भृतकारवेल्लमांसादिसर्पोत्पलनालादयः प्रतिपत्तव्याः, एवं मनसोऽपि स्वप्ने शब्दादिविषया अवग्रहादयोऽवसेयाः, अन्यत्र चेन्द्रियव्यापाराभावेऽभिमन्यमानास्येति, अन्ये त्वेवं पठन्ति—"अत्थाणं उग्गहणंमि उग्गहो तह वियालणे ईहा । ववसायंमि अवाओ धरणं पुण धारणं बेन्ति ॥१॥ [वि० २९३] तत्रार्थाना-मवग्रहणे सत्यवग्रहो नाम मतिभेद इत्येवं ब्रुवते, एवमीहादिष्वपि योज्यं, भावार्थस्तु प्राग्वत्, अथवा प्राकृतशैलया-ऽर्थवशाद्विभक्तिपरिणाम इति[वा] प्रथमार्थे सप्तमी द्रष्टव्या॥ सांप्रतमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह-

उग्गह इक्कं समयं ईहावाया मुहुत्तमद्धं तु ।
कालमसंखं संखं च धारणा होइ णायव्वा ॥४॥



उक्तलक्षणोऽर्थावग्रहो यो जघन्यो नैश्चयिकः स एकं समयं भवति, अत्र 'कालाध्वनोर्व्याप्ता'विति (सिद्ध०)द्वितीया, तत्र परमनिकृष्टः कालविशेषः समयः, स च प्रवचनोक्तोत्पलपत्रव्यतिभेदोदाहरणात् पट्टशाटिकापाटनदृष्टान्ताच्चावसेयः, सांव्यवहारिकार्थावग्रहव्यञ्जनावग्रहौ तु पृथग् पृथगंतर्मुहूर्त्तकालमानौ, ईहा च अवायाश्च ईहावायौ, प्राकृतत्वाद् द्विवचने बहुवचनं, तौ मुहूर्त्तार्धं ज्ञातव्यौ, तत्र मुहूर्त्तशब्देन घटिकाद्वयमानः कालोऽभिधीयते, तस्यार्द्धं तु विशेषणार्थः, किं

विशिनष्टि ? व्यवहारापेक्षया नैतन्मुहूर्त्तार्धमुक्तं, तत्त्वतस्त्वन्तर्मुहूर्त्तमनसेयं. अन्ये त्वेवं पठन्ति—'मुहूर्त्तमंतं तु' अन्तर्मुहूर्त्तं, अंतर्मध्यकरणे, तुरेवार्थः, ईहावायौ भिन्नमुहूर्त्तमंतर्मुहूर्तमेवेत्यर्थः, कलनं कालः तं, न विद्यते संख्या यस्य सोऽसंख्यः पल्योपमादिस्तं, संख्यायते इति संख्या इयन्तः पक्षमासर्त्वयनादयः इत्येवं संख्याप्रमितस्तं, चादन्तर्मुहूर्त्तं च, अयमत्र भावार्थः—अवायोत्तरकालमविच्युतिरूपा अन्तर्मुहूर्त्तं भवति, स्मृतिरूपाप्येवं, वासनारूपा तु तदावरणक्षयोपशमाख्य-संस्कारापरपर्यायो, अत एव स्मृतिधारणाया बीजभूता. संख्येयवर्षायुषां सत्त्वानां संख्येयं कालम्, असंख्येयवर्षायुषां पल्योपमादिजीविनामसंख्येयमिति ॥संप्रति श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतामाह—

पुट्ठं सुणेइ सद्दं रूवं पुण पासइ अपुट्ठं तु ।
गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥५॥

श्रोत्रेन्द्रियं कर्तृ शब्दं कर्मतापन्नं, शब्दप्रायोग्यद्रव्यसंघातमित्यर्थः, शृणोति—गृह्णाति परिच्छिनत्तीत्यर्थः, स्पृष्टं तनौ रेणुवदालिङ्गितमात्रं, किमुक्तं भवति ? शब्दद्रव्याणि सकललोकव्यापीनि सूक्ष्माणि, अत एव द्रव्येन्द्रियस्यान्तरपि मनाक् प्रविशन्ति, तदन्यद्रव्यवासकस्वभावानि च, श्रोत्रेन्द्रियं च शेषेन्द्रियगणापेक्षया प्रायः पटुतरं, ततः स्पृष्टमात्रमेव शब्दद्रव्यसमूहं गृह्णाति, रूपं पुनः पश्यति—गृह्णात्युपलभते. अस्पृष्टं—अनालिङ्गितं, गन्धादिवत् न संबद्धमित्यर्थः, तुरवधारणे, अस्पृष्टमेवेत्यर्थः, चक्षुषोऽप्राप्यकारित्वात्, पुनः शब्दो विशेषणार्थः, स चैतद्विशिनष्टि अस्पृष्टमपि योग्य-देशावस्थितं, न पुनरयोग्यदेशावस्थितममरलोकादि, गन्ध्यते—आघ्रायत इति गन्धः तं, रस आस्वादने, रस्यते इति

रसस्तं च, स्पृश्यते इति स्पर्शः तं च, चौ पूरणार्थौ, बद्धं—आश्लिष्टं नवशरावे तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थः, स्पृष्टं पूर्ववत्, प्राकृतशैलया चेत्थमुपन्यासः, परमार्थतस्तु स्पृष्टं च तत् बद्धं च स्पृष्टबद्धमिति,

ननु यद्बद्धं गंधादि तत् स्पृष्टं भवत्येव, अस्पृष्टस्य बंधायोगात्, ततः स्पृष्टशब्दोच्चारणं गतार्थत्वादनर्थकमिति नैष दोषः, शास्त्रारम्भस्य सर्वश्रोतृसाधारणत्वात्, त्रिविधा हि श्रोतारः केचिदुद्घटितज्ञाः केचिन मध्यमबुद्धयः केचित् प्रपंचितज्ञा इति, तत्र प्रपंचितज्ञानामनुग्रहाय गम्यमानस्याप्यभिधानमदोषायेति, प्रकृतभावार्थस्त्वयं-गन्धादिद्रव्याणि स्वल्पानि तदन्यावासकानि च, घ्राणादीनि चेन्द्रियाणि श्रोत्रेन्द्रियापेक्षयाऽपटूनि, ततो घ्राणेन्द्रियादिगणा गन्धादि आलिङ्गितानन्तरमात्मप्रदेशैरात्मीकृतं गृह्णाति, नान्यथेति, एवं व्यागृणीयात्—प्रतिपादयेत् स्वशिष्येभ्यः प्रज्ञापकः,

नन्विदमुक्तं—योग्यदेशावस्थितमेव रूपं पश्यति नायोग्यदेशावस्थितं, तत्र कियांश्चक्षुषो विषयः ? कियतो वा देशादागतं श्रोत्रादि गृह्णाति ?, उच्यते, श्रोत्रं तावत् शब्दं जघन्यतोऽङ्गुलासंख्येयभागमात्रादेशादुत्कर्षतस्तु द्वादशयोजनेभ्य इति, चक्षुरपि जघन्यतोऽगुलसंख्येयभागमात्रावस्थितं रूपं पश्यति उत्कर्षस्तु सातिरेकयोजनशतसहस्रव्यवस्थितं, घ्राणरसस्पर्शनानि तु जघन्येनाङ्गुलासंख्येयभागमात्रात् देशादागतं गन्धादि गृह्णन्ति, उत्कर्षतस्तु नवयोजनेभ्यः, तत्रेदमिन्द्रियविषयमानमात्माङ्गुलेन प्रतिपत्तव्यं,

ननु देहमानमुच्छ्रयाङ्गुलेन, देहाश्रितानि चेन्द्रियाणि, ततस्तेषां विषयमानमुच्छ्रयाङ्गुलेन वक्तुमुचितं, कथमुच्यते, आत्माङ्गुलेन ?, नैष दोषः, यद्यपि हि नाम देहाश्रितानीन्द्रियाणि तथापि तेषां विषयपरिमाण-

मात्माङ्गुलेन, देहादन्यत्विन्द्रियविषयपरिमाणं, तस्यात्माङ्गुलप्रमेयत्वात्, यद्युच्छ्रयाङ्गुलेन स्यात्ततः को दोषः ?, उच्यते, पञ्चधनुःशतादिमनुष्याणां विषयव्यवहारव्यवच्छेदः, तथाहि–यद्भरतस्यात्माङ्गुलं तत्किल प्रमाणाङ्गुलं, तच्च प्रमाणाङ्गुलमुच्छ्रयाङ्गुलसहस्रेण भवति, "उस्सेहंगुलमेगं हवइ पमाणंगुलं सहस्सगुण"मिति वचनात्, ततो भरतसगरादिचक्रवर्तिनां या नगर्यो ये च स्कन्धावाराः ते आत्माङ्गुलेन द्वादशयोजनायामतया सिद्धान्ते प्रसिद्धाः, ते उच्छ्रयाङ्गुलप्रमित्याऽनेकानि योजनसहस्राणि स्युः, तथा च सति तत्रायुधशालादिपु ताडितभेर्यादिशब्दश्रवणं न सर्वेषामापद्यते, "बारसहिं जोयणेहिं सोऽयं अइगिण्हए सद्द"मिति वचनात्, समस्तनगरस्कंधावारव्यापी च विजयढक्कादिशब्द आगमे प्रतिपाद्यते, एवमागमप्रसिद्धपञ्चधनुःशतादिमनुष्याणां विषयव्यवहारो व्यवच्छेदं मा प्रापदित्यात्माङ्गुलेनेन्द्रियविषयपरिमाणं ज्ञेयं, नोच्छ्रयाङ्गुलेन।

ननु चक्षुरिन्द्रियविषयमानमुक्तस्वरूपं न घटते, अधिकस्यापि तद्विषयमानस्यागमान्तरे प्रोक्तत्वात्, तथाहि–पुष्करवरार्द्धमानुषोत्तरपर्वतसमीपे मनुष्याः कर्कसंक्रान्तौ प्रमाणाङ्गुलनिष्पन्नैः सातिरेकैरेकविंशतियोजनलक्षैर्व्यवस्थितमादित्यमवलोकमानाः प्रतिपद्यन्ते शास्त्रान्तरे, ततः कथमुक्तं नयनविषयमानमात्माङ्गुलेन घटते ?, प्रमाणाङ्गुलेनापि व्यभिचारात्, सत्यमेतत् केवलमिदं विषयमानं प्रकाश्यविषयं, नतु प्रकाशकविषयं, ततः प्राकाशकेऽधिकतरमपि विषयमानं न विरुध्यते इति न कश्चिद्दोषः, मनसस्तु केवलस्यैव सर्वगतत्वात् न क्षेत्रतो विषयमान, पुद्गलमात्रनिबन्धनाभावात्,

इह यत्पुद्गलमात्रनिबन्धननियतं न भवति न तस्य विषयमानं, यथा केवलज्ञानस्य न भवति च पुद्गलमात्रनिबन्धननियतं मनः तस्मात् तथा स्पृष्टं शृणोति शब्दमित्युक्तं, तत्र शब्दप्रयोगोत्सृष्टान्येव केवलानि द्रव्याणि शृणोति विश्रेणिस्थित एव उतान्यान्येव तद्वासितानि आहोश्विन्मिश्राणीति नोदकाभिप्रायमाशङ्क्य न तावत्केवलानि, तेषां वासकत्वात्तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, किन्तु मिश्राणि तद्वासितानि वा शृणोतीत्यमुमर्थमभिधित्सुराह—

भासासमसेढीओ, स[ह]ं जं सुणइ मीसयं सुणई ।
वीसेढी पुण सद्दं, सुणेइ नियमा पराघाए ॥६॥

भासासमसेढीतो०—भाष्यते इति भाषा—वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः तस्याः समश्रेणयो भाषासमश्रेणयः, समग्रहणं विश्रेणिव्युदासार्थं, श्रेणयो नाम क्षेत्रप्रदेशपङ्क्तयो उच्यन्ते, ताश्च सर्वस्यैव भाषमाणस्य पट्सु दिक्षु विद्यन्ते, यासूत्सृष्टा सती भाषा प्रथमसमय एवाऽऽलोकान्तमनुधावति, ता इतो—गतः प्राप्तो भाषासमश्रेणितः, भाषासमश्रेणिव्यवस्थितः इत्यर्थः, शब्द—भाषात्वेन परिणतं पुद्गलराशिं यं पुरुषाश्वादिसंबंधिनं शृणोति परिच्छेद्यतया गृह्णाति यत्तदोर्नित्याभिसंबंधात् तं मिश्रकं शृणोति, किमुक्तं भवति? भाषकव्युत्सृष्टशब्दद्रव्याणि तद्वासितापान्तरालस्थद्रव्याणि चेत्येवं मिश्रशब्दद्रव्यराशिं शृणोति, न तु वासकमेव वास्यमेव वा केवलं, 'वीसेढी'त्यादि, 'मञ्चाः क्रोशन्ती'त्यादिवत् आधेये आधारोपचारात् विश्रेणिव्यवस्थितः श्रोताऽपि विश्रेणिरुच्यते, विश्रेणिः पुनः श्रोता शब्दमिति, पुनः शब्दग्रहणं पराघातवासितद्रव्याणामपि तथाविधशब्दपरिणामख्यापनार्थं शृणोति नियमात्—नियमेन पराघाते—वासनायां

सत्यां, एतदुक्तं भवति-यानि भाषकोत्सृष्टशब्दद्रव्याणि झल्लर्यादिशब्दद्रव्याणि वा तैः पराघाते वासनाविशेषजनिते सति यानि समुत्पन्नशब्दपरिणामानि द्रव्याणि तान्येन विश्रेणिस्थः श्रृणोति, नतु भाषकाद्युत्सृष्टानि, तेषामनुश्रेणिगामित्वेन विदिग्गमनासम्भवात्, न च कुड्यादिप्रतिघातस्तेषां विदिग्गतिनिमित्तं संभवति, लेष्ठ्वादिबादरद्रव्याणामेव तत्सम्भवात्, तेषां च सूक्ष्मत्वात्, उक्तं च-'भासासमसेढि ठिओ तब्भासामीसियं सुणेइ सद्दं। तद्दव्वभावियाइं अन्नाइं सुणेइ विदिसित्थो'॥(३५३ वि.)॥ अथवा विश्रेणीं स्थित एव विश्रेणिरभिधीयते. पदैकदेशस्य पदेऽपि प्रयोगदर्शनाद् यथा भीमसेनः सेन इति, वीसेढीं पुण इति पाठे तु विश्रेणिं पुनरिति इति वर्त्तते, भावार्थः स एव ॥६॥ केन पुनर्योगेनैषां वाग्द्रव्याणां ग्रहणमुत्सर्गो वा ? कथं वेत्येतदाशङ्क्य गुरुराह—

गिण्हइ य काइएणं, निस्सरइ तह वाइएण जोएणं ।
एगंतरं च गिण्हइ, णिसिरइ एगंतरं चेव ॥७॥



कायेन निर्वृत्तः कायिकः तेन कायिकेन योगेन, योगो-व्यापारः क्रियेत्यनर्थान्तरं, सर्व एव हि वक्ता कायक्रियया शब्दद्रव्याणि गृह्णाति, चोऽवधारणे तस्य च व्यवहितः सम्बधः गृह्णाति कायिकेनैवेति. निसृजति-मुञ्चति, तथेत्यानन्तर्ये, ग्रहणानंतरमित्यर्थः, वाचा निर्वृत्तो वाचिकस्तेन वाचिकेन योगेन, कथं एकान्तरमेव गृह्णाति ? निसृजत्येकान्तरं चैवेति, यथा ग्रामादन्यो ग्रामो-ग्रामान्तरं, पुरुषादनंतरः पुरुषः-पुरुषान्तरं एवमेकैकस्मात्समयादेकैक एवान-

न्तरसमय एकान्तरं, प्रतिसमयं गृह्णाति प्रतिसमयं मुञ्चतीति भावार्थः, शरीरव्यापारे सति येन व्यापारविशेषेण शब्दद्रव्योपादानं करोति स कायिको योगः, येन तु कायसंरम्भेण तान्येव मुञ्चति स वाचिकः, येन तु मनोद्रव्याणि मनस्त्वेन व्यापारयति स मानसः, ततः काययोग एव संव्यवहारार्थं त्रिधा विभक्तः, ग्रहणं हि स्वतंत्रं, प्रथमसमये निसर्गमन्तरेणापि तस्य भावात्, ततो नैवादेस्तदापेक्षया सान्तरं, निसर्गस्तु ग्रहणपरतंत्रो अगृहीतस्य निसर्गायोगात् इति पूर्वपूर्वग्रहणसमयापेक्षया सान्तरव्यपदेशः, यानि यानि यस्मिन् यस्मिन् समये गृहीतानि शब्दद्रव्याणि तानि तानि तत्तद्ग्रहणसमयानन्तरसमये सर्वाणि निसृजति, ततो ग्रहणापेक्षया सान्तरो न निरन्तर इति, अथवैकेनाद्यसमयेन गृह्णाति 'सर्ववाक्यं सावधारणं'मितिन्यायाद् गृह्णात्येव, नतु निसृजति, द्वितीयसमयादारभ्य निसर्गप्रवृत्तेः, प्रथमसमये पूर्वगृहीतद्रव्यासम्भवात्, तथा एकेन–पर्यन्तवर्त्तिना समयेन निसृजति–निसृजत्येव, नतु गृह्णाति, भाषणादुपरमात्, अपान्तरालवर्तिषु समयेषु ग्रहणनिसर्गौ, स्थापना–

| ग्र | ग्र | ग्र | ग्र | ग्र | ग्र | ० |
|---|---|---|---|---|---|---|
| ० | नि | नि | नि | नि | नि | नि |

ननु ग्रहणनिसर्गावात्मनः परस्परविरुध्धौ ततः कथमेकस्मिन् समये तौ युज्येते ? नैष दोषः एकस्मिन् समये कर्मादाननिसर्गक्रियावत् तथा उत्पादव्ययक्रियावत् अङ्गुल्याकाशसंयोगविभागक्रियावच्च ग्रहणनिसर्गक्रियाद्वयस्यापि सद्भावोपपत्तेः, एकस्मिन् समये यथा जीवस्वाभाव्यात् द्वावुपयोगौ न भवतो 'जुगवं दो नत्थि उवओगा' इति वचनात्, क्रियास्तु बह्वयोऽपि घटन्ते एव, कायवाङ्मनःक्रियाणामेकस्मिन्नपि समये युगपत्प्रवृत्तिदर्शनात्, यदुक्तं—

गृह्णाति कायिकेनैवे'त्यादि, तत्र कायिको योगः पञ्चधा, औदारिकवैक्रियाहारकतैजसकार्मणभेदात्, ततः किं पञ्चप्रकारेणापि गृह्णाति आहोश्विदन्यथेत्याशङ्कासम्भवे तदपनोदार्थमिदमाह—

तिविहंमि सरीरंमि, जीवपएसा हवंति जीवस्स ।
जेहि उ गिण्हइ गहणं, तो भासइ भासओ भासं ॥८॥

त्रिविधे—त्रिप्रकारे शरीरे औदारिकाहारकवैक्रियशरीराणामन्यतरस्मिन्नित्यर्थः, जीवस्य प्रदेशा जीवप्रदेशाः, इत्थमुच्यमाने भिक्षोः पात्रमित्यादौ षष्ठ्या भेदेऽपि दर्शनान्माभूद् भिन्नप्रदेशतया शिष्याणामप्रदेशात्मसम्प्रत्ययोऽत आह, जीवस्येति जीवस्यात्मभूता भवन्ति, अनेन निष्प्रदेशजीववादनिरासमाह, सति निष्प्रदेशत्वे करचरणोरुग्रीवाद्यवयवसंसर्गभावप्रसक्तेः, यै जीवप्रदेशैः किं करोतीत्याह—यैस्तु गृहणाति तु विशेषणार्थः, किं विशिनष्टि ?, न सर्वदैव गृह्णाति किन्तु तत्परिणामे सतीति, कि गृहणाति ? गृह्यत इति ग्रहणं—शब्दद्रव्यसमूहमित्यर्थः, ततो गृहीत्वा भाषते—वक्ति भाषको—भाषणक्रियाविशिष्ट इत्यर्थः, अनेन निष्क्रियात्मवादव्यवच्छेदमाह, सति तस्मिन्निष्क्रियत्वेनाप्रच्युतानुत्पन्नस्थिरैकरूपत्वाद्भाषणाभावप्रसक्तेः, किं भाषत इत्याह—भाष्यत इति भाषा तां—

ननु ततो भाषते भाषकः इत्यनेन गतार्थत्वात् भाषाग्रहणमतिरिच्यते, न अभिप्रायापरिज्ञानात्, इह भाष्यमाणैव भाषोच्यते, न पूर्वं न पश्चादित्यस्यार्थस्य ख्यापनायादुष्टमेव, यदुक्तं—

त्रिविधं शरीरं यद्गतैर्जीवप्रदेशैर्वाग्द्रव्याणि गृहीत्वा भाषको भाषत इति, तत्र न ज्ञायते कतमत् त्रैविध्य-

मिति तदभिधातुकामाह––

ओरालियवेउव्वियआहारो गिण्हई मुयइ भासं ।
सच्चं मोसं सच्चामोसं च असच्चमोसं च ॥९॥

इहौदारिकशब्देन शरीरतद्वतोरभेदोपचारात् मत्वर्थीयलोपाद्वा औदारिकशरीरवान् जीव एव गृह्यते, एवं वैक्रियवान् वैक्रियः, आहारकवानाहारकः, असौ औदारिकादिर्गृह्णाति–आदत्ते, शब्दयोग्यानि द्रव्याणीति गम्यते, गृहीत्वा भाषात्वेन परिणमय्य निसृजति–मुञ्चति भाषाशब्दपरिणतद्रव्यसहतिं, किं विशिष्टामित्याह–सत्यां–सन्तो मुनयस्तेषामेव मुक्तिमार्गप्रवृत्ततया तात्त्विकशिष्टत्वात् तेभ्यो हिता निरवद्यानुष्ठानरूपतया मुक्तिमार्गानुकूलत्वादुपकारिणी सत्या, यत् यस्मै हितं तत्तत्र साध्विति–

'तत्र साधौ यः प्रत्ययः, अथवा सन्तो–मूलोत्तरगुणास्तेषामेव मुक्तिमार्गतयाऽतिप्रशस्यत्वात् तेभ्यो हिता तदाराधनात्, यद्वा सन्तो–जीवादयः पदार्थास्तेभ्यो हिता यथावस्थितत्वस्वरूपप्रत्याकत्वात्, यथाऽस्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपा, तद्विपरीताऽसत्या यथा नास्ति जीवः, अस्ति चेत्तदा एकान्तसद्रूप इत्यादि, सत्यामृषा यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेषु अशोकवनमेवेदमित्यादिरूपा, तत्राशोकतरूणां सद्भावात् सत्याऽन्येषामपि धवादीनां सद्भावान्मृषा, या न सत्या नापि मृषा साऽसत्यामृषा, हे ! देवदत्त ! घटमानय, गां देहि मह्यमित्यादिरूपा, इयं हि स्वरूपमात्रप्रतिपादनफलत्वात् न यथोक्तलक्षणा सत्या नापि मृषा (नापि सत्यामृषा) ततः असत्या चासावमृषा

च असत्यामृषा, आसां च स्वरूपमुदाहरणयुक्तं प्रज्ञापनासूत्राद् ज्ञेयं, नन्वौदरिकादिर्गृह्णाति मुञ्चति भाषामित्युक्तं, तत्र सा मुक्ता सति उत्कर्षतः कियत्क्षेत्रं व्याप्नोति ? उच्यते सकलमेव लोकं, यद्येवं तर्हि——

कइहिं समएहि लोगो, भासाइ निरंतरं तु होइ फुडो ।
लोगस्स य कइभागे, कइभागो होइ भासाए ॥१०॥

'कइहि' मित्यादिसूत्रं, अयं सूत्रतः संबंधः, अथवाऽर्थतः, ननु यद् द्वादशयोजनेभ्यः परतो न शृणोति शब्दं, मंदपरिणामत्वाद्रव्याणामित्युक्तं, तत्र किं परतोऽपि द्रव्याणामागतिरस्ति, यथा च विषयाभ्यन्तरे नैरंतर्येण तद्वासनासामर्थ्यं एव बाहिरप्यस्ति उत नेत्युच्यते, अस्ति, केषांचित् कृत्स्नलोकव्याप्तेः, यद्येवं तर्हि 'कइहिं०' कतिभिः समयैर्लोकश्चतुर्दशरज्ज्वात्मकः क्षेत्रलोको गृह्यते ?, भाषया निरंतन्तरमेव भवति स्पृष्टो—व्याप्तः, पूर्ण इत्यर्थः——

चउहिं समएहि लोगो, भासाइ निरंतरं तु होइ फुडो ।
लोगस्स य चरमंते, चरमंतो होइ भासाए ॥११॥



लोकस्य च कतिभागे कतिभागो भवति भाषायाः ?, अत्रोच्यते, चतुर्भिः समयैर्लोको भाषया निरंतरमेव भवति स्पृष्टो—व्याप्तः, किं सर्वथैव भाषया उत विशिष्टया ? उच्यते, विशिष्टया कथम् ? इह कश्चिद्वक्ता मंदप्रयत्नः कश्चिन्महाप्रयत्नः तत्राद्यो यथारूपाणि शब्दद्रव्याणि गृहीत्वांस्तथारूपाण्येवाभिन्नानि जातमन्दशब्दपरिणामानि निसृजति, तानि

च तथा निसृष्टानि मन्दप्रयत्ननिसृष्टत्वात् परिस्थूराणि, अत एव तदन्यद्रव्यवासनोत्पादपाटवरहितानि असंख्येयानि योजनानि गत्वा खण्डशो भिद्यन्ते, भिद्यमानानि च संख्येयानि योजनानि गत्वा शब्दपरिणामं विजहाति, यस्तु महाप्रयत्नो वक्ता, स खल्वादानप्रयत्नेनापि भित्त्वैव गृह्णाति, गृहीत्वा च शब्दपरिणाममपि तेषामत्युत्कटमुत्पादयति, उत्पात्य च निसर्गप्रयत्नेन भूयो भित्त्वा निसृजति, तानि च तथा निसृष्टानि सूक्ष्मत्वादतिप्रभूतत्वादत्युत्कटशब्दपरिणामत्वाच्च तदन्यानि बहूनि द्रव्याणि वासयन्ति, तदन्यद्रव्यवासकतया षट्स्वपि दिक्षु अनन्तगुणवृद्धया परिवर्द्धमानानि लोकान्तमाप्नुवन्ति, शेषं तु तत्पराघातवासितानि द्रव्याणि लोकमापूरयन्ति, इह चतुःसमयग्रहणात्त्रिसमयग्रहणमपि प्रत्येतव्यं, तुलादीनां मध्यग्रहणे आद्यन्तग्रहणवत्, कथं त्रिभिः समयैर्लोको भाषया निरन्तरमापूरितो भवति ?, उच्यते, इह यदा लोकमध्यस्थो वक्ता भवति तदा तेन निसृष्टानि भाषापरिणतानि द्रव्याणि प्रथमसमये एव षट्सु दिक्षु लोकान्तमनुधावन्ति, जीवसूक्ष्मपुद्गलानामनुश्रेणिगमनात्, द्वितीयसमये तु त एव षट् दण्डाः चतुर्दिक्षु एकैकशोऽनुश्रेण्या वासितद्रव्यैः प्रसरन्तः षट् मन्थानो भवन्ति, तृतीयसमये तु पृथक् तदन्तरालापूरणात् पूर्णो भवति लोकः, एवं त्रिभिः समयैर्भाषया लोकः स्पृष्टो भवति, यदा तु स्वयम्भूरमणपरतटवर्तिनि लोकान्तेऽलोकास्याऽत्यन्तनिकटीभूय त्रसनाड्या बहिश्चतसृणां दिशामन्यतमस्यां दिशि व्यवस्थितो भाषको वक्ति तदा चतुर्भिः समयैरापूर्यते, कथं ?, एकेन समयेन अंतस्त्रसनाडिं शब्दद्रव्याण्यनुप्रविशन्ति, तदा वाम१दक्षिण२पृष्ठो३र्द्ध्वा४धो५दिशामलोकेन संवलितत्वात्, शेषसमयभावना प्राग्वत्, यदा तु त्रसनाड्या बहिर्विदिक् स्थितो भाषको वक्ति तदा पुद्गलानामनुश्रेणिगमनात् प्रथमसमयेन विदिशो दिशि गमनं द्वितीयेन तु नाड्यन्तः प्रवेशः, शेषं समयत्रयं प्राग्वदित्येवं पञ्चभिः समयैः सकललोकपूरणं,

अत्र च त्रिसमयपक्षे चतुःसमयपक्षे च येऽनुश्रेणिस्थिता निष्कुटास्त एव पूर्यन्ते, वक्रनिष्कुटपूरणं तु न बुद्धयते एव, स्वल्पत्वाच्च न विवक्षितमिति लक्ष्यते, अन्ये तु जैनसमुद्घातगत्या सकललोकापूरणमिच्छन्ति, तेषां चाद्यसमये भाषायाः खलु ऊर्ध्वाधोगमनाच्छेषदिक्षु न मिश्रशब्दश्रवणसंभवः, उक्तं चाविशेषेण "भासासमसेढीतो सद्दं जं सुणइ मीसयं सुणइ" इति, अथ व्याख्यानतोऽर्थप्रतिपत्तिरिति न्यायाद् दण्ड एव मिश्रशब्दश्रवणं भवति, नाशेषदिक्षु, ततश्चादोष इति, अत्रोच्यते, एवमपि त्रिभिः समयैर्लोकमापूरणमापद्यते, न चतुःसमयसंभवोऽस्ति, कथम् ?, प्रथमसमयानन्तरमेव शेषदिक्षु पराघातद्रव्यसद्भावात्, द्वितीयसमय एवमभिधानसिद्धः, तृतीये च तदन्तरालापूरणादिति——

ननु जैनससुद्घातवच्चतुर्भिरेवापूरण भविष्यति, को दोषः ?, उच्यते, जैनसमुद्घाते हि स्वरूपेणापूरणात् न तत्र पराघातद्रव्यसम्भवोऽस्ति, सकर्मजीवव्यापारत्वात्तस्य, ततश्च तत्र द्वितीयसमये कपाटनिर्वृत्तिरेव, शब्दद्रव्याणां त्वनुश्रेणिगमनात् पराघातद्रव्यान्तरवासकस्वभावत्वाद्द्वितीयसमय एव मन्थानापत्तिः, अचित्तमहास्कन्धोऽपि वैश्रसिकत्वात्पराघाताभावाच्चतुर्भिरेवापूरयति, न चैवं शब्दः यदुक्तं—

'लोकस्य च कतिभागे कतिभागो भवति भाषाया' इति, तत्रोत्तरमाह—लोकस्य च क्षेत्रगणितमपेक्ष्य चरमान्तेऽसंख्येयभागेऽसंख्येयभागो भवति भाषायाः समस्तलोकव्यापिन्याः, इयमत्र भावना त्रिसमयव्याप्तौ चतुःसमयव्याप्तौ पञ्चसमयव्याप्तौ वा नियमेन प्रथमद्वितीयसमययोर्लोकासंख्येयभागे चरमान्तोऽसंख्येयभागे भाषायां भवति—

तथाहि—त्रिसमयव्याप्तौ प्रथमे दण्डषट्कं द्वितीये मन्थानषट्कं, ते च दण्डादयो यद्यपि दैर्घ्येण लोकान्तस्पर्शिनः

तथापि वक्तृमुखनिर्गतत्वात् प्रमाणानुसारेण बाहल्येन चतुरङ्गुलादिमाना भवन्ति, चतुरादीनि चाङ्गुलानि लोकसंख्येयभागे वर्त्तते इति त्रिसमयव्याप्तौ आद्ययोः समयोर्लोकाऽसंख्येयभागे भाषया असंख्येयभागो भवति, तथा चतुःसमयव्याप्तौ आद्ये लोकमध्यमात्रप्रवेशो द्वितीये दण्डोत्पत्तिः, पञ्चसमयव्याप्तौ तु आद्ये भाषाद्रव्याणां विदिशो दिशि गमनं द्वितीये लोकमध्यमात्रप्रवेशः स्यादित्युभयत्रापि आद्ययोः समययोर्लोकासंख्येयभागे भाषया असंख्येयभगाः, त्रिसमयव्याप्ता तृतीयसमये तु सकललोकव्याप्तिः, चतुःसमयव्याप्तौ तु तृतीयसमये लोकसंख्येयभागे भाषाया अपि संख्येयभागः, कथमिति चेदुच्यते, स्वयंभूरमणपश्चिमपरतटवर्तिनि लोकान्ते त्रसनाड्या बहिर्वा पश्चिमदिशि स्थित्वा ब्रुवतो भाषकस्य चतुरङ्गुलादिबाहल्यो रज्जुदीर्घो दण्डस्तिरश्चीनं गत्वा स्वयंभूरणणपूर्वतटवर्तिनि लोकान्ते लगति, ततो द्वितीयसमये तस्माद्दण्डादूर्ध्वाधश्चतुर्दशरज्जूच्छ्रितः पूर्वापरतिरश्चोनतया रज्जुविस्तृतः पराघातवासितद्रव्याणां दण्डो निर्गच्छति, लोकमध्ये तु पराघातवासितद्रव्याणामेव चतुरङ्गुलादिबाहल्यरज्जुविस्तीर्णं दण्डद्वयं निर्गत्य स्वयंभूरमणदक्षिणोत्तरवर्तिलोकान्तयोर्लगति, एवं च सति चतुरङ्गुलादिबाहल्यं सर्वतो रज्जुविस्तीर्णं लोकमध्ये वृत्तछत्वरं सिद्धं भवति, तृतीयसमये तूर्ध्वाधोऽव्यवस्थितदण्डाच्चतुर्दिक्प्रसृतः पराघातवासितद्रव्यसमूहो मन्थानं साधयति लोकमध्यस्थितसर्वतोरज्जुविस्तीर्णछत्वरादूर्ध्वाधोविस्तृतः पुनः स एव त्रसनाडी समस्तामपि पूरयति, एवं च सति त्रसनाडी सर्वाऽपि ऊर्ध्वाधोऽव्यवस्थितदण्डमथिभावेन तदधिकं च लोकस्य पूरितं भवति एतावच्च क्षेत्रं लोकस्य संख्याततमो भागः, तथा च सति चतुःसामयिक्या व्याप्तेस्तृतीयसमये लोकस्य संख्याततमे भागे भाषाया अपि समस्तलोकव्यापिन्याः संख्याततमो भाग इति,

गाथा—११

पञ्चसामयिक्यास्तु व्याप्तेस्तृतीयसमये लोकासंख्येयतमभागे भाषाया असंख्येयभागः, तस्यां तस्य दण्डसमयत्वात् , तत्र चोक्तप्रकारेणासंख्येयभागवर्त्तित्वभावादिति, चतुर्थे तु समये चतुःसामयिक्यां व्याप्तौ मध्यान्तरालपूरणात्समस्तलोकव्याप्तिः, पञ्चसामयिक्यां व्याप्तौ तु तुर्यसमये लोकस्य संख्येयभागे भाषायाः संख्येयो भागः, तस्यां तस्य मथिसमयत्वात् तत्र च संख्येयभागवर्तित्वस्य प्रागेव भावितत्वात् , पञ्चसामयिक्यां पञ्चमसमये मध्यन्तरालपूरणात् समस्तलोकव्याप्तिः, एतच्च महाप्रयत्नवक्तृनिसृष्टद्रव्यापेक्षया द्रष्टव्यं, मन्दप्रयत्नवक्तृनिसृष्टानि तु लोकासंख्येयभाग एव वर्त्तन्ते, दण्डादिक्रमेण लोकापूरणाऽसंभवात् , त्रिचतुःपञ्चसमयव्याप्तौ त्र्यादिसमयेष्वापूरिते लोके लोकस्य चरमान्ते भाषाया अपि चरमान्तो भवति, किमुक्तं भवति ?, लोके निष्ठां गते भाषाऽपि निष्ठां यातीति । 'तत्त्वभेदपर्यायैर्व्याख्या' इति न्ययात्तत्त्वतो भेदतश्च मतिज्ञानस्वरूपमुक्तं ।

इदानीं नानादेशजविनेयगणसुखप्रतिपत्तये तत्पर्यायशब्दानाह—

गाथा—१२

ईहा अपोह वीमंसा, मग्गणा य गवेसणा ।
सण्णा सइ मइ पण्णा, सव्वं आभिणिबोहियं ॥१२॥

ईहनमीहा—स्थाणुर्वा पुरुषो वेति विचारणा, सतामर्थानामन्वयिनां व्यतिरेकिणां च पर्यालोचनेत्यर्थः, अपोहनं अपोहो—निश्चयः, विमर्शनं—विमर्शोऽवायात्पूर्वं ईहाया उत्तरः, प्रायः शिरःकण्डूयनादयः पुरुषधर्माः, नात्र राजपथि स्थाणुर्भवति, ततः पुरुषः संभाव्यते इति संप्रत्ययः, अस्तित्वरूपं अन्वयिधर्मान्वेषणं मार्गणा, चः समुच्चयार्थः,

नास्तित्वरूपं व्यतिरेकधर्मालोचनं गवेषणा, संज्ञानं संज्ञा व्यंजनार्थावग्रहोत्तरकालभाविमतिविशेषः, स्मरणं स्मृतिः—पूर्वानुभूतार्थालंबनप्रत्ययः, मननं—मतिः—कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मपर्यालोचनरूपा बुद्धिः, प्रज्ञानं प्रज्ञा, विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा मतिरित्यर्थः, सर्वमिदमाभिनिबोधिकं, मतिज्ञानमित्यर्थः, एवं कथञ्चिद्भेदाद् भेदः प्रदर्शितः, परमार्थतस्तु सर्वे एते मतिवाचकाः पर्यायशब्दाः ।

संप्रति नवभिरनुयोगद्वारैः पुनस्तद्रूपनिरूपणार्थमाह—

संतपयपरूवणया दव्वपमाणं च खित्त फुसणा य ।
कालो अ अंतर भाग, भावे अप्पाबहुं चेव ॥१३॥

सच्च तत्पदं च सत्पदं तस्य परूपणं—गत्यादिद्वारेषु विचारणं सत्पदप्ररूपणं तस्य भावः सत्पदप्ररूपणता, मतिज्ञानमिति यत्सत्पदं तस्य गत्यादिभिर्द्वारैः प्ररूपणमित्यर्थः, यद्वा सन्ति च तानि पदानि च—स्थानानि सत्पदानि गत्यादीनि तैः प्ररूपणं मतेः १,द्रव्यप्रमाणमिति जीवद्रव्यप्रमाणं वक्तव्यं, एकस्मिन् समये मतिज्ञानं कियन्तः पतिपद्यन्ते ?, सर्वे वा कियन्तः ? इति २, चः समुच्चये, क्षेत्रं वक्तव्यं, कियति क्षेत्रे मतिज्ञानं संभवति ? ३, स्पर्शना च वक्तव्या, कियत् क्षेत्रं मतिज्ञानिनः स्पृशन्ति ?, ननु क्षेत्रस्य स्पर्शनायाश्च कः प्रतिविशेषः ?, उच्यते, यत्रावगाहस्तत् क्षेत्रं, स्पर्शना तु तद्बाह्यतोऽपि भवति, यथा परमाणुमभिकृत्योक्तं 'एगपएसं खेत्तं सत्तपएसा यसे फुसणा (४३२वि.)' चः समुच्चये ४, कालः—स्थितिलक्षणो मतेर्वाच्यः, चः प्राग्वत्५, अन्तरे एकदा प्रतिपद्य विमुक्तः, कियता कालेन पुनरपि

तत्प्रतिपद्यते ६, भागो मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्तन्ते७, भावः कस्मिन् भावे मतिज्ञानिनो वर्तन्ते८, अल्पबहुत्वं९ च वक्तव्यं, ननु भागद्वारेणैवायमर्थोऽवगतस्ततः किमनेन द्वारेण ?, न, अभिप्रायापरिज्ञानात्, इह मतिज्ञानिनामेव पूर्वप्रतिपन्नप्रतिपद्यमानकानां परस्परमल्पबहुत्वं च वक्तव्यं, इह च ये मतिज्ञानलाभस्याद्ये समये वर्त्तन्ते प्रतिपद्यमानकाः, ये तु तल्लाभस्य द्वितीयादिसमयेषु वर्त्तन्ते ते पूर्वप्रतिपन्नाः, भागस्तु शेषज्ञानापेक्षया ॥१३॥

गइ इंदिए य काए, जोए वेए कसायलेसासु ।
समत्तनाणदंसणसंजयउवओगआहारे ॥१४॥
भासग-परित्त-पज्जत्तसुहुमे सण्णी य होइ भव-चरिमे ।
आभिणिबोहिअनाणं, मग्गिज्जइ एसु ठाणेसु ॥१५॥

गाथाद्वयेन मतिज्ञानस्य सत्पदप्ररूपणताद्वारावयवार्थः प्रतिपाद्यते, मतिज्ञानं किमस्ति नास्ति इति ?, अस्ति, यद्यस्ति क्व तत् ?, तत्र गतिमङ्गीकृत्य मृग्यते, सा गतिश्चतुर्धा—नारकतिर्यग्मनुष्यामरभेदात्, तत्र चतुर्विधायामपि गतौ मतिज्ञानस्य पूर्वप्रतिपन्ना नियमतो विद्यन्ते, प्रतिपद्यमानकास्तु विवक्षितकाले भाज्याः, कदाचिद्भवन्ति कदाचिन्नेति इंद्रियाण्यंगीकृत्य मृग्यते, तत्र पञ्चेन्द्रियाः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु भाज्याः, द्वित्रिचतुरिन्द्रियास्तु करणपर्याप्तावस्थायां पूर्वभवायातं सास्वादनसम्यक्त्वमङ्गीकृत्य पूर्वप्रतिपन्नाः सम्भवन्ति, नत्वितरे,

एकेन्द्रियेषु तूभयाभावः २, कायानधिकृत्य विचार्यते, तत्र त्रसकाये पूर्वपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु भाज्याः, शेषकायेषु पञ्चसूभयाभावः, एतच्च सिद्धान्ताभिप्रायेण, कार्मग्रन्थिकाभिप्रायेण तु लब्धिपर्याप्तबादरपृथ्व्यप्वनस्पतिषु करणापर्याप्तेषु पूर्वप्रतिपन्नाः सम्भवन्ति, सासादनसम्यक्त्वस्य तदभिप्रायेण तेषु भावात्, इतरे तु सर्वथा नैव, तेजोवायवस्तूभयविकला एव ३, योगानधिकृत्य मनोवाग्काययोगेषु समुदितेषु पञ्चेन्द्रियवद्वक्तव्यं, मनोरहितवाग्योगिषु विकलेन्द्रियवत्, केवलकाययोगिष्वेकेन्द्रियवत् ४, तथा वेदानधिकृत्य स्त्रीपुंनपुंसकरूपेषु त्रिष्वपि वेदेषु पूर्वप्रतिपन्नाः सन्ति, अन्ये भाज्याः ५, कषायद्वारे आद्येष्वनंतानुबन्धिक्रोधादिषु सासादनसम्यक्त्वमङ्गीकृत्य पूर्वप्रतिपन्ना लभ्यन्ते, नत्वितरे, शेषेषु द्वादशकषायेषु आद्या नियमतः सन्ति, अन्ये भाज्याः६, लेश्याद्वारे [१]लेषयन्त्यात्मानमष्टविधेन कर्मणेति लेश्याः, कायाद्यन्यतमयोगवतः कृष्णादिद्रव्यसम्बन्धादात्मनः परिणामा इत्यर्थः, तत्राद्यासु तिसृषु आद्याः (पूर्वप्रतिपन्नाः) सम्भवन्ति, नेतरे, शेषासु गतिवत्७, सम्यक्त्वद्वारे व्यवहारनिश्चयाभ्यां विचारः, तत्र व्यवहारनयमतेन सम्यग्दर्शनमतिश्रुतानां प्रतिपद्यमानको मिथ्यादृष्टिरेव स्यात् नतु सम्यग्दृष्टिः, सन्मतिश्रुते प्रतिपद्यते, कुतः ?, सम्यग्दर्शनमतिश्रुतानां युगपल्लाभात्, यदि हि प्राप्ते सति सम्यक्त्वे मतिश्रुते प्रतिपद्यते तदा स्यात्सम्यग्दृष्टिर्मतेः प्रतिपद्यमानकः न चैतदस्ति, सम्यक्त्वेन सहैव तल्लाभात्, अथ सम्यक्त्वेन सह लब्धेऽपि मतिश्रुते सम्यग्दृष्टिः पुनरपि प्रतिपद्यते तर्हि अनवस्था, ततः सम्यग्दृष्टिः पूर्वप्रतिपन्न एव, नेतरः, निश्चयस्त्वाह—सम्यग्दृष्टिः पूर्वप्रतिपन्नः, प्रतिपद्यमानकश्च मतेः सम्यग्दर्शनसहायत्वात्।

नतु मतिलाभस्य सम्यग्दर्शनसहायत्वादिति व्यवहारेणाप्युक्तं, तत्कोऽस्य व्यवहाराद्विशेषो येनास्य सम्यग्दृष्टिः मतेः प्रतिपद्यमानको भवति ? इत्याह क्रियाकालनिष्ठाकालयोरभेदादिति, निश्चयो हि मन्यते यदैव सम्यक्त्वप्राप्तिक्रियाविशिष्टो भवति जीवस्तदैव सम्यग्दृष्टिव्यपदेशमासादयति, क्रियाकालस्य निष्ठाकालस्य चैकत्वात्, अतः सम्यग्दृष्टिः सन्नेतदभिप्रायेण मतिज्ञानं प्रतिपद्यत इति ८, ज्ञानद्वारे मत्यादिभेदाज्ज्ञानं पञ्चधा, अत्रापि व्यवहारनिश्चयाभ्यां विचारः, तत्र व्यवहारमतेन मतिश्रुतावधिमनःपर्यायज्ञानिष्वाद्याः, नापरे, न ह्येतन्मतेन ज्ञानी सन्मतिज्ञानं प्रतिपद्यते किंत्वज्ञानीति, केवलिन्युभयाभावः, तस्य क्षायोपशमिकज्ञानातीतत्वात्, तथा मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानवन्तस्तु कदाचिद्विवक्षितकाले प्रतिपद्यमानकः भवन्ति, नापरे, निश्चयनयमतेन तु मतिश्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति, अन्येऽपि सम्भवति, सम्यग्दर्शनलाभस्य एव मत्यादिलाभस्य संभवात्, क्रियाकालनिष्ठाकालयोश्चाभेदात्, मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव नापरे, पूर्वसम्यक्त्वलाभकाले प्रतिपन्नमतिज्ञानस्यैव पश्चाद्यत्यवस्थायां मनःपर्यायज्ञानसद्भावात्, केवलिनां तूभयाभवो, मत्यादिज्ञानव्यवच्छेदेन केवलोत्पत्तेः, मत्याद्यज्ञानिषु तूभयाभावः, प्रतिपत्तिक्रियाकाले मत्याद्यज्ञानाभावात्, क्रियाकालनिष्ठाकालयोरभेदात्, अज्ञानभावे च प्रतिपत्तिक्रियाया अभावात् ९, दर्शनद्वारे–दर्शनं चतुर्द्धा–चक्षुरचक्षुरवधिकेवलभेदात्, आद्ये दर्शनत्रये लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमतः प्राप्यन्ते, अन्ये भाज्याः, तदुपयोगं त्वाश्रित्य पूर्वप्रतिपन्ना एव, नान्ये, मतिज्ञानस्य लब्धित्वात्, लब्ध्युत्पत्तेश्च दर्शनोपयोगे निषिद्धत्वात्, 'सव्वाओ लद्धीओ सागारोवआगोवउत्तस्स उववज्जन्ति 'इति वचनात्, केवलदर्शनिनां तूभयाभावः, अन्यदर्शनव्यवच्छेदेन केवलज्ञानदर्शनोत्पत्तेः १०, संयतद्वारे संयतः पूर्वप्रतिपन्नो नियमाल्लभ्यते, प्रतिपद्यमानकस्तुभाज्याः ।

ननु सम्यत्क्वलाभावस्थायामेव मतेः प्रतिपन्नत्वात्संयतः कथं प्रतिपद्यमानकोऽवाप्यते ?, सत्यमेतत् केवलं योऽतिविशुद्धत्वात् सम्यत्क्वं चारित्रं च युगपत्प्रतिपद्यते स तस्यामवस्थायां प्रतिपद्यमानस्य संयमस्य प्रतिपन्नत्वात् संयतो मतेः प्रतिपद्यमानको भवति ११, उपयोगद्वारे स द्विधा—साकारोऽनाकारश्च, तत्र पञ्च ज्ञानानि त्रीण्यज्ञानानि साकारः, चत्वारि दर्शनानि अनाकारः, तत्र साकारोपयोगे पूर्वप्रतिपन्ना नियमतः सन्ति, अन्ये भाज्याः. अनाकारोपयोगे आद्या एव नान्ये, तत्र लब्ध्युत्पत्तेरभावात्१२, आहारकद्वारे आहारका गतिवत्, अनाहारका अपान्तरालगतौ आद्याः, नान्ये१३. भाषकद्वारे—भाषालब्धिसंपन्ना भाषकाः, ते भाषमाणा अभाषमाणा गतिवत्, भाषालब्धिशून्याश्चोभयविकलाः, ते ह्येकेन्द्रिया एव, तेषामुभयाभावः१४, परीत्तद्वारे-परीत्ताः-प्रत्येकशरीरिणः परीत्तकृतसंसारा वा स्तोकावशेषसंसारा इत्यर्थः, एते उयेभऽपि गतिवत्, अपरीत्तास्तु साधारणशरीरिणोऽपार्धपुद्गलपरावर्त्तादप्युपरि वा, ते मिथ्यादृष्टित्वादुभयेऽप्युभयविकलाः१५, पर्याप्तकद्वारे षड्भिराहारादिपर्याप्तिभिर्ये पर्याप्ताः ते पर्याप्तकाः पूर्वप्रतिपन्नाः सन्ति, अन्ये भाज्याः, अपर्याप्तास्त्वाद्या नान्ये१६, सूक्ष्मद्वारे सूक्ष्माः संमूर्च्छनजनराः, ते खलूभयविकलाः, बादरेषु तु केवलज्ञानस्याभिधानात्तत्र गर्भजनरा ज्ञेयाः, अतो गतिवत् १७, संज्ञिद्वारे—इह दीर्घकालिक्युपदेशेन संज्ञिनो गृह्यन्ते, ते च गतिवत् असंज्ञिनस्तु आद्या एव, नान्ये १८, भवद्वारे—भव इति भवसिद्धिकाः, ते च गतिवत्, अभवसिद्धिकास्तूभयविकलाः १९, चरमद्वारे, चरमो भवो भविष्यति येषां ते अभेदोपचाराच्चरमाः, ते गतिवत् अचरमास्तूभयविकलाः २०, मतिज्ञानमेतेषु गत्यादिमार्गणास्थानेषु मार्गितमुक्तप्रकारेणेति।

साम्प्रतमाभिनिबोधिकजीवद्रव्यप्रमाणमुच्यते, पूर्वप्रतिपन्ना जघन्यतः क्षेत्रपल्योपमासंख्येयभागप्रदेशराशिप्रमाणाः २, क्षेत्रद्वारे नानाजीवानङ्गीकृत्य सर्वे एव मतिज्ञानिनो लोकसंख्येयभागे वर्त्तते, एकजीवस्त्विलिकागत्या गच्छन्नूर्ध्वमनुत्तरसुरेषु सप्त चतुर्दशभागेषु रज्जुप्रमाणेषु वर्त्तते, तेभ्यो वाऽऽगच्छत अधस्तु षष्ठीं पृथ्वीं गच्छंस्ततो वा प्रत्यागच्छन् पञ्चसु चतुर्दशभागेषु नातः परमधः क्षेत्रमस्ति यस्मात्सम्यग्दृष्टेरधः सप्तमनरकगमनं प्रतिषिद्धं, षष्ठीमपि पृथ्वीं यावत् सैद्धान्तिकमतेनाविराधितसम्यक्त्वो गृहीतेनापि क्षायोपशमिकदर्शनेन न कश्चिदुत्पद्यते, नन्वधः सप्तमपृथिव्यामपि सम्यक्त्वलाभस्य प्रतिपादितत्वादागच्छतः पञ्चसप्तभागाधिकक्षेत्रसंभवः, उच्यते, एतदयुक्तं, सप्तमनरकात् सम्यग्दृष्टेरागमनस्यापि निषेधात्, यस्मात्तत उद्वृत्तास्तिर्यक्ष्वेवागच्छन्ति इति प्रतिपादितं, अमरनारकाश्च सम्यग्दृशो मनुष्येष्विति ३, स्पर्शनाद्वारे स्पर्शना क्षेत्रादधिका, यथा परमाणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशा च स्पर्शना ४, कालद्वारे उपयोगमधिकृत्यैकस्यानेकेषां च जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमात्र एव कालः, लब्धिमङ्गीकृत्य जघन्येनैकस्यान्तर्मुहूर्त्तमुत्कर्षतः षट्षष्टिसागरोपमाण्यधिकानि, कथम्?, उच्यते, विजयादिषु त्रयस्त्रिंशत्सागरस्थितिकेषु देवेषु वारद्वयं गतस्य यद्वाऽच्युते द्वाविंशतिसागरस्थितिकेषु देवेषु त्रीन् वारान् गतस्य षट्षष्टिसागरोपमाणि भवन्ति, अधिकं चेह नरभवसंबंधि पूर्वकोटीनां त्रयं चतुष्टयं वा द्रष्टव्यं, नानाजीवापेक्षया तु सर्वकालं, यस्मान्नकदाचिदपि लोक आभिनिबोधिकलब्धिमच्छून्यो भवति, ५, अन्तरद्वारे—तत्रैकजीवमधिकृत्य मतेरन्तरं जघन्येनान्तर्मुहूर्त्तं, कथं? यथाकश्चिज्जीवः सम्यक्त्वसहितां मतिमवाप्य प्रतिपत्य चान्तर्मुहूर्त्तं मिथ्यात्वे स्थित्वा पुनरपि तदावरणकर्मक्षयोपशमात् ससम्यक्त्वं मतिज्ञानमवाप्नोति इति, उत्कर्षतस्त्वपार्द्धपुद्ग-

लपरावर्त्तः, स चाशातनाप्रचुरस्य, उक्तञ्च 'तित्थयर-पवयणसुयं आयरियं गणहरं महड्ढीयं । आसायंतो बहुसो अणंतसंसारिओ भणिओ ॥९॥ ४३७वि.' नानाजीवानपेक्ष्यान्तराभावः, मतिज्ञानिभिर्लोकस्य सर्वदाऽशून्यत्वात् ६, भागद्वारे-मतिज्ञानिनः शेषज्ञानिनामज्ञानिनां चानंततमे भागे वर्त्तन्ते, शेषज्ञानिनो हि सिद्धकेवलिसहिताः, अज्ञानिनस्तु वनस्पतिसहिताः अनन्ताः, मतिज्ञानिनस्तु सर्वलोकेऽप्यसंख्याता एवेति ७, भावद्वारे-मतिज्ञानिनः क्षायोपशमिके भावे वर्त्तन्ते, मत्यादिचतुष्टयस्य क्षायोपशमिकत्वात् ८, अल्पबहुत्वद्वारे सद्भावे सति सर्वस्तोकाः प्रतिपद्यमानकाः, तेभ्यः पूर्वप्रतिपन्ना जघन्यपदिनोऽसंख्यातगुणाः, तेभ्योऽप्युत्कृष्टपदिनः पूर्वप्रतिपन्ना विशेषाधिकाः एव९ ॥१५॥

सम्प्रति यथा व्यावर्णितमतिभेदसंख्याप्रदर्शनद्वारेणोपसंहरन्नाह—

आभिणिबोहियनाणे, अट्ठावीसइ हवन्ति पयडीओ ।
सुयणाणे पयडीओ, वित्थरओ आवि वोच्छामि ॥१६॥

गाथा-१६

आभिनिबोधिकज्ञाने भवन्ति अष्टाविंशतिः प्रकृतयो-भेदा इत्यर्थः, ताः पूर्वमेव भाविताः, ननु प्रागवग्रहादिप्ररूपणायाम'त्थाणं ओग्गहणमि'त्यादावेताः प्रकृतयः प्रदर्शिता एव, किमर्थं पुनः प्रदर्श्यन्ते ? नैष दोषः, तत्र हि सूत्रे न संख्यानियमः कृतः इह तु संख्यानियमेनोक्ताः । इदञ्च मतिज्ञानं चतुर्द्धा, तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः सामान्यादेशेन मतिज्ञानी सर्वद्रव्याणि जानाति, न विशेषतः, किमुक्तं भवति सामान्यप्रका-

रेणासंख्येयप्रदेशात्मको लोकव्यापी अमूर्त्तः प्राणिपुद्गलानां गतिपरिणामपरिणतानां गत्युपष्टम्भहेतुर्धर्मास्तिकायः, असंख्येयप्रदेशात्मक एव लोकव्यापी अमूर्त्तः प्राणिपुद्गलाना स्थितिपरिणामपरिणतानां स्थित्युपष्टम्भहेतुरधर्मास्तिकायः, अनन्तप्रदेशात्मको लोकालोकव्यापी अमूर्त्तोऽवकाशदानहेतुराकाशास्तिकायः, इत्यादिरूपेण षडपि द्रव्याण्यवबुध्यते, न तु सर्वविशेषेण, सर्वपर्यायाणां केवलिगम्यत्वात्, एवं सामान्यादेशेन मतिज्ञानी क्षेत्रतो लोकालोकं जानाति, कालतः सर्वकाल, इह यद्यपि क्षेत्रकालौ सामान्येन द्रव्यान्तर्गतौ तथापि निवासमात्रपर्यायमधिकृत्य क्षेत्रं वर्तनादिरूपतां चाधिकृत्य कालो भेदेन रूढ इति पृथगुपादानं, भावत औदयिकादीन् पञ्च भावान् जानाति तदेवमुक्तं मतिज्ञानम्, साम्प्रतमवसरप्राप्तं श्रुतज्ञानमाह—

इति उत्तरार्धं, श्रुतज्ञाने प्रकृतयो–भेदास्ताः विस्तरतश्च संक्षेपतश्च, अपि सम्भावने, स च, एतदनन्तरमवधि प्रकृतीश्चेति संभावयति, वक्ष्ये

अधुना श्रुतप्रकृतिर्दर्शयति ।

गाथा–१७

पत्तेयमक्खराइं, अक्खरसंजोगजत्तिआ लोए ।
पवइया पयडीओ, सुयनाणे हुंति णायव्वा ॥१७॥

एकमेकं प्रति प्रत्येकं, अक्षराणि–अकारादीनि अनेकभेदानि, तद्यथा अकारः सानुनासिको निरनुनासिकश्च,

पुनरेकैकस्त्रिधा-उदात्तोऽनुदात्तः स्वरितश्चेति षोढा अकारः, एवं दीर्घः प्लुतश्चेत्यष्टादशावर्णभेदाः एवमिवर्णादिष्वपि यथासंभवं भेदजालं वक्तव्यं, तथाऽक्षराणां संयोगा द्व्यादयो यावन्तो लोके, यथा घटः पट इत्यादि व्याघ्रहस्तीत्यादि च, एते चानन्ताः, तत्राप्येकैकोऽनंतपर्यायः स्वपरपर्यायापेक्षया, ननु संख्येयानि अकारादीन्यक्षराणि ततस्तेषां संयोगा अपि संख्येया एव, ते कथमनन्ताः ?, उच्यते, इह पुद्गलास्तिकायादिकमभिधेयं परस्परविलक्षणमनंतं च, तद्यथा-परमाणुर्द्विप्रदेशिकस्त्रिप्रदेशिको यावदनन्ताणुक इत्यादि, अभिधेयभेदे चाभिधानस्यापि भेदः, अभिधानभेदस्याभिधेयभेदहेतुकत्वात्, एकत्रापि चाभिधेयेऽभिधेयधर्मभेदतोऽनेकाभिधानप्रवृत्तिः, यथा परमाणुर्निरंशो निरवयवो निष्प्रदेशो निर्भेदः, तथा द्व्यणुको द्व्यंशो द्विप्रदेशो द्विभेदो द्व्यवयव इत्यादि, न चैते ध्वनयः सर्वथैकाभिधेयवाचकाः, सर्वशब्दानां भिन्नप्रवृत्तिनिमित्तत्वात्, एवं सर्वद्रव्येषु सर्वद्रव्यपर्यायेषु च यथायोगं भाव्यं, ततो भवत्यनंता अक्षरसंयोगाः, एतावत्यः-इयत्प्रमाणाः प्रकृतयः श्रुतज्ञाने भवन्ति-ज्ञातव्याः॥ संप्रति सामान्यरूपतयोपदर्शितानामनन्तानां श्रुतप्रकृतीनां यथावद्भेदेन प्रतिपादनसामर्थ्यमात्मनः खल्वपश्यन्नाह ।

कत्तो मे वण्णेउं, सत्ती सुयणाणसव्वपयडीओ ? ।
चउदसविहनिक्खेवं, सुयनाणे आवि वोच्छामि ॥१८॥

गाथा-१८

कुतो मे-मम वर्णयितुं-प्रतिपादयितुं शक्तिः-सामर्थ्यं ?, नैवेत्यर्थः, का ?, श्रुतज्ञानसर्वप्रकृती, प्रकृतयो-भेदाः, कथं न शक्तिः ?, उच्यते, इह ये श्रुतग्रन्थानुसारिणो मतिविशेषास्तदपि श्रुतमिति प्रतिपादिताः, उक्तश्च 'ते विय

मईविसेसा सुयनाणऽब्भंतरे जाण'[विशे०]तांश्चोत्कृष्टश्रुतधरोऽप्यभिलाप्यानपि न सर्वान् भापितुं समर्थः, तेषामनन्तत्वाद् आयुपः परिमितत्वाद्वाचः क्रमवर्तित्वाच्च अतोऽशक्तिः, निक्षेपणं निक्षेपो नामादिन्यासः, चतुर्दशविधश्चासौ निक्षेपश्च श्रुतं, तज्ज्ञाने—श्रुतज्ञानविषयं, चात् श्रुताज्ञानविपयं, अपिशब्दादुभयविषयं च. तत्र श्रुतज्ञानं सम्यक्श्रुतं, श्रुताज्ञानं असंज्ञिमिथ्याश्रुते उभयश्रुते दर्शनविशेषपरिग्रहादक्षरानक्षरादिरूपे, वक्ष्ये ॥चतुर्दशविधश्रुतनिक्षेपस्वरूपोपदर्शनार्थमाह

अक्खर सण्णि सम्मं, साईयं खलु सपज्जवसिअं च ।
गमियं अंगपविट्ठं, सत्तवि एए सपडिवक्खा ॥१९॥

अक्षरादीनि सप्तद्वाराणि अनक्षरादिप्रतिपक्षसहितानि चतुर्दश भवन्ति, सर्वत्र श्रुतशब्दो योज्यः, अक्षरश्रुतमनक्षरश्रुतमित्यादि, 'क्षर संचलने' न क्षरतीत्यक्षरं, तच्च ज्ञानं, चेतनेत्यर्थः, न खल्विदमनुपयोगेऽपि प्रच्यवतेऽतोऽक्षरमिति भावः, इत्थंभूतभावाक्षरकारणात्वादकारादिकमप्यक्षरमभिधीयते, कारणे कार्योपचारात्, अथवाऽर्थान्क्षरति न च क्षयमुपयातीत्यक्षरं, तच्च त्रिधा व्यञ्जनाक्षरं संज्ञाक्षरं लब्ध्यक्षरं च, तत्र व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं तच्च तदक्षरं च व्यञ्जनाक्षरं, तच्चेह भाष्यमाणं सर्वमेवाकारादि हकारान्तं, अर्थाभिव्यञ्जकत्वाच्छब्दस्य, संज्ञाक्षरमक्षराकारविशेषो, यथा घटिकासंस्थानो घकार इत्यादि, तच्च ब्राह्म्यादिलिपिविधानेनानेकविधं, योऽक्षरोपलंभस्तल्लब्ध्यक्षरं, तच्चेन्द्रियमनोनिमित्तं श्रुतग्रन्थानुसारिज्ञानं तदावरणकर्मक्षयोपशमो वा, तत्र व्यञ्जनाक्षरं संज्ञाक्षरं च द्रव्याक्षरमुक्तं, श्रुतज्ञानाख्यभावाक्षरकारणत्वात्, लब्ध्यक्षरं तु भावाक्षरं, विज्ञानात्मकत्वात् उक्तमक्षरश्रुतं—

अनक्षरश्रुतस्वरूपमाह—

उससिअं नीससिअं, निच्छूढं खासिअं च छीअं च ।
णीसिंघियमणुसारं, अणक्खरं छेलियाईअं ॥२०॥

उच्छ्वसनमुच्छ्वसितं, भावे क्तप्रत्ययः, निःश्वसनं निःश्वसितं, निष्ठीवनं निष्ठ्यूत—थूत्कृतमित्यर्थः, कासनं कासितं, चः समुच्चये, क्षवणं क्षुतं चः समुच्चयार्थ एव, तस्य च व्यवहितः संबन्धः, सेण्टितादि चानक्षरश्रुतमिति, निस्संघनं निस्सिंघितं, अनुस्वारवत् अनुस्वारं, मत्वर्थीयात् प्रत्ययविधानादनक्षरमपि यदनुस्वारवत् उच्चार्यते हुंकार-करणादिवत्तदनक्षरमित्यर्थः, एतदुच्छ्वसिताद्यनक्षरमनक्षरश्रुतं, न केवलमेतत्, किन्तु सेण्टितं—चौरमिलनसंज्ञा, एतदादि चानक्षरश्रुतं, इह चोच्छ्वसितादिद्रव्यश्रुतमात्रं ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तजन्तोः सर्व एव व्यापारः श्रुतं, तस्य तद्भावेन परिणतत्वात्. ननु यद्येवं किमित्युपयुक्तस्य चेष्टाऽपि श्रुतं नोच्यते येनोच्छ्वसिताद्येवोच्यते ? उच्यते, रूढ्या, अथवा श्रूयत इति, श्रुतमित्यन्वर्थसंज्ञामधिकृत्योच्छ्वसिताद्येवश्रुतं, न चेष्टा, तदभावात्, अनुस्वारादयस्त्व-र्थगमकत्वादेव श्रुतं । संज्ञिद्वारं—संज्ञीति कः शब्दार्थः ?, उच्यते, संज्ञानं संज्ञा, सा अस्यास्तीति संज्ञी—

ननु यदि संज्ञासंबंधमात्रेण संज्ञी तत एकेन्द्रियाऽपि संज्ञिनः प्राप्नुवन्ति, तेषामप्याहारादिसंज्ञासद्भावात्, तथा च प्रज्ञापनासूत्रम्—'एगिंदियाणं भन्ते ! कइविहा सण्णा पण्णत्ता ?, गोयमा ?, दसविहा पन्नत्ता, तंजहा—आहारसन्ना

भयसन्ना मेहुणसन्ना परिग्गहसण्णा कोहसण्णा माणसण्णा मायासण्णा लोभसण्णा ओहसण्णा लोगसण्णा' इति, सत्यमेतत् , केवलमेतासु मध्ये या ओघसंज्ञा लोकसंज्ञा वा साऽतिस्ताका, ततो न तत्सम्बन्धमात्रेण संज्ञीति व्यपदेष्टुं शक्यः, न खलु कार्षापणधनमात्रेण लोके धनवानित्युच्यते, या त्वाहारादिसंज्ञा सा भूयस्यपि मोहनीयोदयप्रभवत्वेन न विशिष्टा, न चाविशिष्टया संज्ञया संज्ञीत्यभिधातुं शक्यं, न ह्यविशिष्टेन मूर्तिमात्रेण लोके स्वरूपवानिति व्यवहारः ततो या महती शोभना च ज्ञानावरणीयकर्मक्षयोपशमजन्या मनोज्ञानरूपा संज्ञा तयैव संज्ञीति व्यपदिश्यते, स च संज्ञी त्रिविधः, तद्यथा दीर्घकालिक्युपदेशेन हेतुवादोपदेशेन दृष्टिवादोपदेशेन, तत्र यया संज्ञया सुदीर्घमपि कालमतीतमर्थं स्मरति एष्यन्तं च चिन्तयति स दीर्घकालः सोऽस्या अस्तीति दीर्घकालिकी सा चासावुपदेशश्च, उपदेशो—भणनं, दीर्घकालिक्युपदेशस्तेन, मनोज्ञानावरणकर्मक्षयोपशमवशान्मनोलब्धिसंपन्नोऽनन्तान् मनोलब्धियोग्यान् पुद्गलान् गृहीत्वा मनस्त्वेन परिणमय्य मन्यते चिन्तनीयं वस्तु तान्, तेनासौ गर्भजस्तिर्यग् मनुष्या वा देवो नारको वा द्रष्टव्यो, न शेष एकेन्द्रियादिः, विशिष्टमनोलब्धिविकलत्वात् . तथा च सति दीर्घकालिक्युपदेशेनासंज्ञी एकेन्द्रियो द्वीन्द्रियादिश्च प्रतिपत्तव्यः, तथा हेतुर्निमित्तं कारणं तस्य वदनं वादस्तद्विषयं उपदेशः—प्ररूपणं सः, तेन संज्ञी यो बुद्धिपूर्वकं स्वदेहपरिपालनाय ईष्टेष्वाहारादिषु प्रवर्तते, अनिष्टेभ्यस्तु निवर्तते, स च द्वीन्द्रियादिरपि ज्ञेयः, तत्रापि मनःसश्चिन्तनपूर्वकमिष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात् , केवलमस्य मनश्चिन्तनं प्रायो वर्तमानकालविषयं, न भूतभविष्यद्विषयं, अल्पमनोलब्धिसंपन्नत्वात् , ततो नादिमः संज्ञी लभ्यते, एतन्मतेनासंज्ञिन एकेन्द्रिया एव द्रष्टव्याः, तथा—दृष्टिर्दर्शनं—सम्यक्त्वादि तस्य वदनं वादस्तद्विषयं उपदेशः प्ररूपणं तेन संज्ञी सम्यग्दृष्टिस्तस्य संज्ञा ज्ञानावरणकर्म-

क्षयोपशमभावात्, असंज्ञी मिथ्यादृष्टिः, संज्ञिनः श्रुतं संज्ञिश्रुतं, असंज्ञिनः श्रुतमसंज्ञिश्रुतं तथा सम्यक् श्रुतं—अङ्गानङ्गप्रविष्टमाचाराऽऽवश्यकादि, मिथ्याश्रुतं—पुराणरामायणादि, सर्वमेव वा दर्शनपरिग्रहविशेषात्सम्यक्श्रुतं इतरद्वा, तथाहि—सम्यग्दृष्टौ सर्वमपि सम्यक्श्रुतं हेयोपादेयशास्त्राणां हेयोपादेयतया परिज्ञानात्, मिथ्यादृष्टौ सर्वं मिथ्याश्रुतं विपर्ययात् तथा सादिसपर्यवसितमनाद्यपर्यवसितं च नयानुसारतोऽवसेयं, तत्र द्रव्यास्तिकनयमतादेशेन अनाद्यपर्यवसितं नित्यत्वात्, धर्मास्तिकायादिवत्, पर्यायास्तिकनयमतादेशेन सादिसपर्यवमितमनित्यत्वात् नारकादिपर्यायवत्, अथवा द्रव्यादिचतुष्टयमधिकृत्य यथा द्रव्यत एकं पुरुषं प्रतीत्य सादिसपर्यवसितं नानाजीवानाश्रित्यानाद्यपर्यवसितं, कदाचिदपि व्यवच्छेदाभावात्, क्षेत्रतः पञ्चभरतानि पञ्चैरवतानि प्रतीत्य सादिसपर्यवसितं, सुषमसुषमादावभावात्, पञ्चमहाविदेहानधिकृत्यानाद्यपर्यवसितं, सकलकालं तत्र भावात्, कालत उत्सर्पिणीमवसर्पिणीं चाधिकृत्य सादिसपर्यवसितं, तृतीयाद्यरकेष्वेव भावात्, नोत्सर्पिण्यवसर्पिणीमधिकृत्यानाद्यपर्यवसितं, महाविदेहेषु सततं भावात्, भावतः प्रज्ञापकगतान् उपयोगस्वरप्रयत्नस्थानविशेषादीन् भावान् ज्ञेयगतांश्च गतिस्थानभेदसंघातवर्णरसगन्धस्पर्शादीन् भावान् प्रतीत्य सादिसपर्यवसितं इदमुक्तं भवति प्रज्ञापकोपयोगादिभावा हि प्रयत्नादिनिर्वर्त्यत्वादनित्याः, प्रज्ञापनीयभावा अपि पुद्गलादिसंबन्धिनो गतिस्थित्यादयोऽनित्या एव, यच्चानित्यं तद्घटवत्सादिसपर्यवसितमिति प्रतीतमेव अतस्तदाश्रयं श्रुतमपि तद्रूपमेवेति, क्षायोपशमिकं पुनर्भावमङ्गीकृत्यानाद्यपर्यवसितं, तस्य सर्वकालं भावात्, खलुशब्दः एवार्थः, स चावधारणे तस्य च व्यवहितसंबंधः, सप्तैवैते श्रुतपक्षाः सप्रतिपक्षाः, न पुनः पक्षान्तरमस्ति, सतोऽत्रैवान्तर्भावात्।

गमिकद्वारं—तत्र गमा—भंगका गणितादिविशेषाश्च यदि वा कारणवशतो ये सदृशपाठाः, तेऽस्य सन्ति इति गमिकं 'अतोऽनेकस्वरात्( )इति मत्वर्थीय इकप्रत्ययः, तथा प्रायो दृष्टिवादः, गाथाद्यसमानग्रन्थमगमिकं, तच्च प्राय. कालिकं, नन्वङ्गप्रविष्टानंगप्रविष्टयोः कः प्रतिविशेषः ?, उच्यते, यद्गणधरैः साक्षाद् दृब्धं तदङ्गप्रविष्टं, तच्च द्वादशाङ्गं, यत्पुनः स्थविरैर्भद्रबाहुस्वामिप्रभृतिभिराचार्यैरुपनिबद्धं तदनङ्गप्रविष्टं, तच्चावश्यकनिर्युक्त्यादि। ननु पूर्वं तावत्पूर्वाणि गणधरैरुपनिबध्यन्ते, पूर्वं करणात्पूर्वाणि, पूर्वेषु च सकलवाङ्मयस्यावतारो, न खलु तदस्ति यत् पूर्वेषु नाभिहित, ततः किं शेषाङ्गविरचनेनाङ्गबाह्यरचनेन वा ?, उच्यते—इह विचित्रा जगति प्राणिनः, तत्र ये दुर्मेधसस्ते पूर्वाणि नाध्येतुमीशाः, पूर्वाणामतिगम्भीरार्थत्वात् तेषां च दुर्मेधस्त्वात्, स्त्रीणां पूर्वाध्ययनानधिकार एव, तासां तुच्छत्वादिदोषबहुलत्वात्, अत्र चातिशेषाध्ययनानि उत्थानश्रुतादीनि. भूतवादो—दृष्टिवादः ततो दुर्मेधसां स्त्रीणां चानुग्रहाय शेषाङ्गानामङ्गबाह्यस्य च विरचनं, गाथाशेषः। अवधारणप्रयोगं दर्शयतो व्याख्यातं। तदेवं प्रतिपादितं स्वरूपेण श्रुतज्ञानं—

गाथा—२०

सांप्रतं विषयद्वारेण निरूप्यते श्रुतज्ञानं चतुर्धा द्रव्यादिभेदात्, तत्र द्रव्यतः श्रुतज्ञानी उपयुक्तः सर्वद्रव्याणि जानाति न तु पश्यति, एवं सर्वक्षेत्रं सर्वकालं, सर्वान् भावान् इदं च श्रुतज्ञानं सर्वातिशयरत्नसमुद्रकल्प प्रायो गुर्वधीनं च, ततो विनेयजनानुग्रहार्थं यो यथा चास्य लाभस्तं तथा दर्शयति—

आगमसत्थग्गहणं, जं बुद्धिगुणेहिं अट्ठहिं दिट्ठं ।
बिंति सुयनाणलंभं, तं पुव्वविसारया धीरा ॥२१॥

आ—अभिविधिना सकलश्रुतविषयव्याप्तिरूपेण मर्यादया वा यथावस्थितप्ररूपणया गम्यन्ते—परिच्छिद्यन्ते अर्था येन स आगमः' पुंनाम्नी'तिकरणे घ-प्रत्ययः, सचैवं व्युत्पत्त्या अवधिकेवलादिरूपोऽपि प्राप्नोति तद्व्यवच्छेदार्थं विशेषणान्तरमाह—शिष्यतेऽनेनेति शास्त्रं, आगमश्च तच्छास्त्रं चेति, आगमग्रहणेन पट्टितन्त्रादिकुशास्त्रव्यवच्छेदः, तेषां यथावस्थितार्थप्रकाशनाभावेनानागमत्वात्, आगमशास्त्रस्य ग्रहणमागमशास्त्रग्रहणं, यद् बुद्धिगुणैर्वक्ष्यमाणैः करणभूतैरष्टभिर्दृष्टं, तदेव ग्रहणं श्रुतज्ञानस्य लाभं ब्रुवते, पूर्वेषु विशारदाः पूर्वविशारदाः; धीरा व्रतपरिपालने स्थिराः, किमुक्तं भवति ?, यदेव जिनप्रणीतवचनार्थपरिज्ञानं तदेव परमार्थतः श्रुतं, न शेषां ? बुद्धिगुणैरष्टभिरित्युक्तमतस्तानेवाह—

सुस्सूसइ पडिपुच्छइ, सुणेइ गिण्हइ य ईहए वावि ।
तत्तो अपोहए वा, धारेइ करेइ वा सम्मं ॥२२॥

पूर्वं शुश्रूषते—विनययुक्तो गुरुवदनोद्विनिर्गच्छद्वचनं श्रोतुमिच्छति, ततः प्रति पृच्छति, यत्र शंकिते भवति तत्र भूयोऽपि पृच्छति यद्गुरुः कथयति तत् सम्यग् व्याक्षेपपरिहारेण सावधानः शृणोति, श्रुत्वा चार्थरूपतया गृह्णाति, गृहीत्वा च ईहते—पूर्वापराविरोधेन पर्यालोचयति, चः समुच्चये, अपिशब्दः पर्यालोचयत् किञ्चित् स्वबुद्ध्याऽप्युत्प्रेक्षते इति

सूचनार्थः, ततोऽपोहते—एवमेतत् यदादिष्टमाचार्येण नान्यथा, ततस्तमर्थं निश्चितं स्वचेतसि विस्मृत्यभावार्थं सम्यक् धारयति करोति च सम्यग् यथोक्तमनुष्ठानं, यथोक्तानुष्ठानमपि श्रुतज्ञानप्राप्तिहेतुस्तदावरणकर्मक्षयोपशमनिमित्तत्वात्, यद्वा यदाज्ञापयति गुरुस्तत्सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषते, पूर्वं सन्दिष्टस्य सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति, पुनरादिष्टः सम्यक् शृणोति, शेषं पूर्ववत् ॥ तदेवं व्याख्याता गुणाः, सम्प्रति यत् शुश्रूषते इत्युक्तं तत्र श्रवणविधिमाह—

मूअं हुंकारं वा बाढकारपडिपुच्छवीमंसा ।
तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥२३॥

प्रथमतो मूकं शृणुयात्, प्रथमश्रवणे संयतगात्रः तूष्णीं खल्वासीत, तथा द्वितीये हुंकारं दद्यात्, वन्दनं कुर्यादित्यर्थः, तृतीये बाढमेतत् नान्यथेति प्रशंसेति, चतुर्थश्रवणे गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, कथमेतदिति, पञ्चमे मीमांसां—प्रमाणजिज्ञासां कुर्यादिति भावः, षष्ठे तदुत्तरोत्तरगुणप्रसङ्गपारगमनं चास्य भवति, परिनिष्ठा सप्तमे श्रवणे, गुरुवदनुभाषते इत्यर्थः, एवं श्रवणविधिरुक्तः—

साम्प्रतं व्याख्यानविधिमाह—

सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसओ भणिओ ।
तइओ य निरवसेसो एस विही भणिअ-अणुओगे ॥२४॥

प्रथमोऽनुयोगः—सूत्रार्थः—सूत्रार्थप्रतिपादनपरक एव, खलुरेवार्थः, गुरूणा प्रथमोऽनुयोगः सूत्राभिधानलक्षण एव कर्तव्यः, माऽभूत्प्राथमिकविनेयानां मतिमोहः, द्वितीयः सूत्रस्पर्शिनिर्युक्तिमिश्रक कार्यः, इति भणितो जिनादिभिः, तृतीयश्च निरवशेषः प्रसक्तानुप्रसक्तप्रतिपादनपरः, एष विधिः उक्तरूपो भवति, क्व ? सूत्रस्य निजेनाभिधेयेन सार्धमनुकूलो योगोऽनुयोगः सूत्रानाख्यानं तत्र, व्याख्याविषय इत्यर्थः, ननु परिनिष्ठा सप्तमे इत्युक्तं त्रयश्चानुयोगप्रकाराः तदेतत्कथं ?, उच्यते, उक्तानामनुयोगप्रकाराणामन्यतमेन केनचित्प्रकारेण भूयो भूयो भाव्यमानेन सप्तवारं श्रवणं कार्यते, न कश्चिद्दोषः, अथवा कश्चिन्मन्दमतिविनेयमधिकृत्य तदुक्तं द्रष्टव्यं, न पुनरेष सर्वत्र श्रवणविधिः, उद्घटितज्ञविनेयानां सकृच्छ्रवणत एवाशेषग्रहणदर्शनात् ॥ उक्तं श्रुतस्वरूपं—

सम्प्रति अवधिज्ञानमाह—

संखाईआओ खलु ओहीनाणस्स सव्वपयडिओ ।
काओ भवपच्चइया, खओवसमिआओ काओऽवि ॥२५॥

गाथा–२५

संख्यामतीताः संख्यातीताः, असंख्येया इत्यर्थः, संख्यातीतमनंतीतमपि भवति ततोऽनन्ता अपीति द्रष्टव्यं, खलुर्विशेषणार्थः, एतद्विशिनष्टि क्षेत्रकालाख्यप्रमेयापेक्षया संख्यातीताः द्रव्यभावाख्यप्रमेयापेक्षया त्वनन्ता इति, अवधिज्ञानस्य प्राग्नि रूपितशब्दार्थस्य प्रकृतयो–भेदाः, सर्वाश्च ताः प्रकृतयश्च सर्वप्रकृतयः, इयमत्र भावना–इहाव धेर्लोकक्षेत्रासंख्येयभागादारभ्य प्रदेशवृद्धयऽसंख्येयलोकपरिमाणमुत्कृष्टमालंबनतया क्षेत्रमुक्तं—

कालश्चावलिकाया असंख्येयभागादारभ्य समयवृद्ध्या खल्वसंख्येयोत्सर्प्पिण्यवसर्प्पिणीप्रमाण उक्तः, ज्ञेयभेदाच्च ज्ञानस्य भेद इति, क्षेत्रकालावधिकृत्यासंख्येयास्तत्प्रकृतयः, तथा तैजसवाग्द्रव्यापन्तरालवर्त्त्यनन्तप्रादेशिकद्रव्यादाराभ्य-विचित्रवृद्ध्यासर्वमूर्तद्रव्याण्युत्कृष्टं विषयपरिमाणं द्रव्यतः, प्रतिवस्तुगतसंख्येयपर्यायपरिमाणं विषयमानं भावतो, ज्ञेय-भेदेनैव च ज्ञानस्यापि भेद इति समस्तं पुद्गलास्तिकायं तत्पर्यायाश्चाङ्गीकृत्यानन्ता अवधेः प्रकृतयः, आसां मध्येः काश्चनान्यतमाः प्रकृतयो भवप्रत्ययाः, कोऽर्थ ?—भवो नारकादिजन्म स पक्षिणां गगनगमनलब्धिरिवोत्पत्तौ प्रत्ययं-कारणं यासां ताः, ताश्च नारकमराणामेव, काश्चन गुणप्रत्ययाः क्षयोपशमेन निर्वृताः क्षायोपशमिक्यः, ताश्चे तिर्यङ्मनुष्याणां, नन्वधिज्ञानं क्षायोपशमिके भावे प्रोक्तं नारकादिभवस्त्वौदयिकः ततः स कथं तासाम वधिप्रकृतीनां प्रत्ययो भवितुमर्हति ?, नैष दोषः, तासामपि क्षयोपशमनिबन्धनत्वात्, केवलमसौ क्षयोपशमस्तस्मिन् नारकामरभवे सत्यवश्यं भावीति भवप्रत्ययास्ता इत्युक्तं ॥

साम्प्रतं सामान्यरूपतयोदिष्टानामवधिप्रकृतीनां वाचः क्रमवर्तित्वादायुषश्चाल्पत्वात् यथावद्भेदेन प्रतिपादनसामर्थ्य-मात्मनोऽपश्यन्निर्युक्तिकृदाह—

कत्तो मे वण्णेउं सत्ती ओहिस्स सव्वपयडीओ ? ॥
चउदसविहनिक्खेवं, इड्ढीपत्ते य वोच्छामि ॥२६॥

कुतो मे वर्णयितुं शक्तिरवधेः सर्वप्रकृतीः १, तथाऽपि विनेयानुग्रहार्थं चतुर्दशविधनिक्षेपमवधेः सम्बन्धिन आमर्षौषध्यादिलक्षणां ऋद्धिं प्राप्ताः ऋद्धिप्राप्तांश्च वक्ष्ये, चः समुच्चये ॥ तत्र चतुर्दशविधनिक्षेपप्रतिपादयिषुस्तद् द्वारगाथाद्वयमाह—

ओही खित्तपरिमाणे, संठाणे आणुगामिए ।
अवट्ठिए चले तिव्वमन्द पडिवाउप्पयाइ ॥२७॥
नाण दंसण विब्भंगे देसे खित्ते गई इअ ।
इड्ढीपत्ताणुओगे य, एमेआ पडिवत्तिओ ॥२८॥

इहावध्यादीनि गत्यन्तादीनि चतुर्दशद्वाराणि, ऋद्धिस्तु चशब्दसमुच्चित्वात् पञ्चदशं, अवधेर्नामादिभेदभिन्नस्य स्वरूपमभिधातव्यं १, तथा जघन्यमध्यमोत्कृष्टभेदभिन्नक्षेत्रपरिमाणविषयोऽवधिर्वक्तव्यः २, एवं संस्थानविषयः ३, अथवाऽर्थवशाद्विभक्तिपरिणामोऽवधिशब्दश्च द्विरावर्त्यते, ततश्चावधेर्जघन्यादिभेदभिन्नक्षेत्रप्रमाणं वक्तव्यं, तथा संस्थानं ४, अनुगमनशील आनुगामिकोऽवधिः सप्रतिपक्षो वक्तव्यः, एकारान्तः शब्दः प्रथमान्त एव यथा 'कयरे आगाच्छइ' इत्यादिषु द्रव्य दिषु कियन्त कालमप्रतिपतितः सन्नुरुपयोगतो लब्धितश्चावतिष्ठते इत्यवस्थितोऽवधिः ५, वर्द्धमानतया क्षीयमानतया च चलः अनवस्थितः ६, तीव्रमन्दावित्येकं द्वारं तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः इति सर्वत्र द्रष्टव्यं, तत्र

तीव्रो विशुद्धः मन्दो ऽविशुद्धः तीव्रमन्दस्तूभयप्रकृतिः ७, प्रतिपातोत्पादावित्यप्येकं, द्रव्याद्यपेक्षया एककाले प्रतिपातोत्पादौ वक्तव्यौ ८, ज्ञानदर्शनविभङ्गवाच्याः किमुक्तं भवति ? किमत्र ज्ञानं ९, किं वा दर्शनं ? १०, को वा विभङ्गः ११, परस्परतश्चामीपामल्पबहुत्वं च वक्तव्यं, द्वारत्रयमेतत्, कस्य देशविपयः सर्वविपयो वाऽवधिर्भवतीति वक्तव्यं १२, संबद्धोऽसंबद्धः संख्येयासंख्येयापान्तरालक्षेत्रद्वारेण क्षेत्रविपयोऽवधिर्वक्तव्यः १३, गतिरति चेत्यत्र इतिशब्दो गण-संसूचको द्रष्टव्यः, 'इत्यादिबहुवचनानि गणस्य संसूचकानि भवन्ती' ति वचनात्, ततो 'गइ इंदिए' इत्यादि द्वारकलापो-ऽवधेर्द्रष्टव्यः १४, ऋद्धिप्राप्तानुयोगश्च वक्तव्यः अनुयोगो व्याख्यानं एवं अनेन प्रकारेण एता—अनन्तरोक्ताः प्रतिपत्तयः प्रतिपदनं प्रतिपत्तिः परिच्छित्तिरित्यर्थः अवधेः प्रकृतय एव प्रतिपत्तिहेतुत्वात्प्रतिपत्तय इत्युच्यन्ते ॥ आद्यद्वारव्याचिख्यासयेदमाह—

नामं ठवणादविए, खित्त काले भवे य भावे य ॥
एसो खलु निक्खेवो ओहिस्स होइ सत्तविहो ॥२९॥

गाथा—२९

यस्य जीवस्याजीवस्य वाऽवधिरिति स्थापनाऽवधिः अक्षादिरेव इति न्यस्यमानः, अथवाऽवधेरेव यदभिधानम-वधिरिति तन्नामावधिः यश्चावधेरालंबनद्रव्यस्य क्षेत्रस्य स्वामिनो वाऽऽकारविशेपः स स्थापनाऽवधिः, अथ द्रव्यावधि-रुच्यते, स द्विविधः-आगमतो नोआगमतश्च, तत्रागमतोऽवधिपदार्थज्ञस्तत्र चानुपयुक्तः नोआगमतस्त्रिविधः-ज्ञशरीरद्रव्यावधिः

भव्यशरीरद्रव्यावधिस्तद्व्यतिरिक्तद्रव्यावधिश्च, तत्राद्ये प्रतीते, तृतीयस्तु साक्षात् सूत्रेणैवोपात्त 'दविए' इति द्रव्यावधिर्द्रव्या लम्बन इत्यर्थः, अथवा सूत्रे प्रथमान्तस्याप्येकारांततो, जिनवचनस्य सर्वस्याप्यर्धमागधभाषात्मकत्वात्, ततो द्रव्यमेवावधिर्द्रव्यावधिः, कारणं द्रव्यमिति भावः, यद्वोत्पद्यमानस्यावधेर्यदुपकारकं शरीरादितदवधिकारणत्वात् द्रव्यावधिः, क्षेत्रेऽवधिः, यत्र क्षेत्रे स्थितस्यावधिरुत्पद्यते यत्र वा क्षेत्रेऽवधिः प्रज्ञापकेन प्रकाश्यते यत्र वा क्षेत्रे स्वयोग्यानि द्रव्याण्यवधेः परिच्छिनत्ति स क्षेत्रस्याधारत्वेन प्राधान्यविवक्षया क्षेत्रेण व्यपदिश्यते इति क्षेत्रेऽवधिः क्षेत्रावधिरित्युच्यते, एवं यत्र प्रथमपौरुष्यादौ कालेऽवधिरुत्पद्यते यत्र वा प्रज्ञापकेन प्ररूप्यते यस्मिन् वा काले स्वयोग्यानि द्रव्याणि परिच्छिनत्ति स कालस्य प्राधान्यविवक्षया कालेन व्यपदिश्यते, कालेनावधिः कालावधिः, भवन्ति तत्तत्कर्मवशवर्त्तिनः प्राणिनोऽत्रेति भवः नारकादिलक्षणः यस्मिन् भवे उत्पद्यते वर्तते प्रेक्षते वा योऽवधिः स भवावधिः भावः क्षयोपशमिको द्रव्यपर्यायो वा तस्मिन्नवधिर्भावावधिः चौ समुच्चयार्थौ एषः अनंतरव्यावर्णितस्वरूपः, खलुरेवार्थः एप एव, नान्यः निक्षेपणं—निक्षेपोऽवधेर्भवति सप्तविधः, गतमाद्यं द्वारम् ॥२९॥

अथक्षेत्राख्यं द्वितीयद्वारं क्षेत्रपरिमाणं च त्रिधा जघन्यमध्यमोत्कृष्टभेदात्, तत्र जघन्यं क्षेत्रपरिमाणमभिधित्सुराह—

गाथा—३०

जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स ।
ओगाहणा जहण्णा, ओहीखित्तं जहण्णं तु ॥३०॥

आहरति—आहारं गृह्णातीत्याहारकः, त्रयः समयाः समाहतास्त्रिसमयं, त्रिसमयमाहारकः 'व्याप्ताविति' (सि.३-१-६१) समासः, त्रिसमयहारकस्य सूक्ष्मनामकर्मोदयवर्त्तिनः पनकजीवस्य वनस्पतिविशेषस्य यावती—यावत्परिमाणा अवगाहन्ते क्षेत्रं यस्यां स्थिता जन्तवः साऽवगाहनातनुरित्यर्थः जघन्या—शेषत्रिसमयाहारकसूक्ष्मपनकजीवापेक्षया सर्वस्तोका, एतावत्परिमाणमवधेर्जघन्यं क्षेत्रं, तुरेवार्थे, अत्रायं सम्प्रदायः यः किल योजनसहस्रपरिमाणायामो मत्स्यः स्वशरीरस्य बहिः स्वशरीरैकदेश एवोत्पद्यमानः प्रथमसमये सकलनिजशरीरसंबद्धमात्मप्रदेशानामायामं संहृत्यांगुलसंख्येयभागबाहल्यं स्व—देहविष्कंभप्रमाणायामविस्तरं प्रतरं करोति, तमपि द्वितीयसमये संहृत्यांगुलसंख्येयभागविष्कंभां मत्स्यदेहविष्कंभप्रमाणायामामात्मप्रदेशसूची विरचयति, तृतीयसमये तामपि संहृत्याङ्गुलासंख्येयभागमात्रः स्वंशरीरस्य बहिष्प्रदेशे सूक्ष्मपरिणामपनकरूपतयोत्पद्यते, तस्योपपातसमयादाराभ्य तृतीयसमये वर्तमानस्य यावत्प्रमाणं शरीरं भवति तावत्प्रमाणं जघन्यमालम्बनवस्तुभाजनक्षेत्रं ज्ञेयं, एतदर्थप्रतिपादिकाः पूर्वाचार्यकृता गाथा दर्श्यन्ते,— 'योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः। उत्पद्यते हि पनकः सूक्ष्मत्वेनेह स ग्राह्यः ॥१॥ संहृत्य चाद्यसमये स ह्यायामं करोति च प्रतरम् । संख्यातीताख्यांङ्गुलविभागबाहल्यमानं तु ॥२॥ स्वकतनुपृथुत्वमात्रं दीर्घत्वेनापि—जीवसामर्थ्यात् । तमपि द्वितीयसमये संहृत्य करोत्यसौ सूचीम् ॥३॥ संख्यातीताख्याङ्गुलविभागविष्कंभमाननिर्दिष्टाम् । निजतनुपृथुत्वदैर्घ्यां तृतीयसमये तु संहृत्य ॥४॥ उत्पद्यते च पनकः स्वदेहदेशे स सूक्ष्मपरिणामः समयत्रयेण तस्यावगाहना यावती भवति ॥५॥ तावज्जघन्यमवधेरालम्बनवस्तुभाजनं क्षेत्रम् । इदमित्यमेव मुनिगुणसम्प्रदायात् समवसेयम् ॥६॥

ननु किमिति महामत्स्यः ?, किं वा तस्य तृतीयसमये निजदेहदेशसमुत्पादः ? त्रिसमयाहारकत्वं वा कल्पते ?, उच्यते, स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनः स्यान्नाऽन्यः, प्रथमद्वितीयसमययोरतिसूक्ष्मः, चतुर्थादिषु चातिस्थूर इति त्रिसमयारकग्रहणं, अन्ये तु व्याचक्षते त्रिसमयाहारक इति आयामविष्कंभसंहारसमयद्वयं सूचिसंहरणोत्पादसमययोश्चेति त्रयः समयाविग्रहाभावाच्चाहारक एवेत्युत्पादसमये एव त्रिसमयाहारकः सूक्ष्मः पनकजीवो जघन्यावगाहनश्च, अतस्तत्प्रमाणं जघन्यमवधिक्षेत्रमिति, एतच्चायुक्तं, त्रिसमयाहारकत्वस्य पनकजीवविशेषणत्वात्, मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमययोगात्, अत्रिसमयाहारकत्वाख्यविशेषणानुपत्तिप्रसंगात्॥ ॥३०॥ अथोत्कृष्टमवधिक्षेत्रमाह—

सव्वबहुअगणिजीवा, निरन्तरं जत्तियं भरिज्जासु ।
खित्तं सव्वदिसागं, परमोही खित्त निद्दिट्ठो ॥३१॥

गाथा—३१

यत ऊर्ध्वमन्य एकोऽपि जीवो न कदाचनापि प्राप्यते ते सर्वबहवः ते च तेऽग्निजीवाश्च सूक्ष्मबादररूपाः सर्वबह्वग्निजीवाः, ते कदा स्युरिति चेदुच्यते, यदा सर्वासु कर्मभूमिषु निर्व्याघातमग्निकायसमारम्भका सर्वबहवो मनुष्याः, ते च प्रायोऽजितस्वामितीर्थकरकाले प्राप्यन्ते, यदा चोत्कृष्टपदवर्त्तिनः (बादराः तदनुरुच्यन्ते तथा) सूक्ष्मानलजीवाः, तदा सर्वबह्वग्निकायजीवपरिमाणं निरन्तरमिति क्रियाविशेषणं, यावत्परिमाणं क्षेत्रं भृतवन्तो—व्याप्तावन्तः

किमुक्तं भवति ? नैरंतर्येण विशिष्टसूचीरचनया यावद्व्याप्तवन्तः, भूतकालनिर्देशश्चाजितस्वामिकाल एव प्रायः सर्वबहवो-ऽनलजीवा अस्यामवसर्पिण्यां स्युरिति ख्यापनाय, इदं चानन्तरोदितविशेषणं क्षेत्रमेकदिक्कमपि भवति अत आह–सर्वदिक्कं, अनेन सूचिपरिभ्रमणप्रमितत्वं क्षेत्रस्य सूचयति, परमश्चासाववधिश्च परमावधिः, सर्वबहुग्निजीवा निरन्तरं यावत् क्षेत्रं सूचिपरिभ्रमणेन सर्वदिक्कं भृतवन्तः, एतावति क्षेत्रे यान्यवस्थितानि रूपीणि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमधिकृत्य निर्दिष्टो गणधरादिभिः, अयमिह सम्प्रदायः सर्वबह्वग्निजीवाहि प्रायोऽजितस्वामितीर्थकरकाले प्राप्यन्ते, तदारम्भकमनुष्यबाहुल्यभावात्, सूक्ष्माश्चोत्कृष्टपदवर्तिनः तत्रैव विवक्ष्यन्ते, ततश्च सर्वबहवोऽनलजीवा भवन्ति, तेषां च स्वबुद्धया षोढाऽवस्थानं कल्प्यते–एकैकक्षेत्रप्रदेशे एकैकजीवावगाहनया सर्वतश्चतुरस्रो घन इति प्रथमं, स एव घनो जीवैः स्वावगाहनाभिरिति द्वितीयं, एवं प्रतरोऽपि द्विभेदः, श्रेणिरवि द्विधा तत्राद्याः पञ्चप्रकारा अनादेशाः, तेषु क्षेत्रस्याल्पीयस्तया प्राप्यमाणत्वात्, षष्ठः प्रकारस्सूत्रादेशः, ततश्चासौ श्रेणिः स्वावगाहनासंस्थापितसकलानलजीवा-वलिरूपाऽवधिज्ञानिनः सर्वासु दिक्षु शरीरपर्यन्तेन भ्राम्यते, सा च भ्राम्यमाणाऽसंख्येयान् लोकमात्रान् क्षेत्रविभागान-लोके प्राप्नोति, एतावत्क्षेत्रमवधिरुत्कृष्टः, इदं च सामर्थ्यमात्रमुपवर्ण्यते, एतावति क्षेत्रे यदि द्रष्टव्यं भवति तर्हि पश्यति यावताऽलोके तन्न विद्यते, रूपिद्रव्याणामसंभवात्, रूपिद्रव्यविषयश्चावधिः, केवलमयं विशेषो–यावद्यापि परि-पूर्णमपि लोकं पश्यति तावदिह स्कन्धानेव जानाति, यदा पुनः अलोकेऽवधिः प्रसरमधिरोहति तदा यथा यथाऽवधिः अभिवृद्धिमासादयति तथा तथा लोके सूक्ष्मसूक्ष्मतरान् स्कन्धान् पश्यति, यावदन्ते परमाणुमपि जघन्यमुत्कृष्टं चावधि-

क्षेत्रमुक्तं, ॥३१॥ अथमध्यमावधिक्षेत्रं गाथाचतुष्टयेनाह

अंगुलमावलियाणं, भागमसंखिज्ज दोसु संखिज्जा ।
अंगुलमावलिअंतो, आवलिआ अंगुलपुहुत्तं ॥३२॥

अङ्गुलमिह क्षेत्राधिकारात् प्रमाणाङ्गुलं गृह्यते, अन्येत्वाहुः—अवध्यधिकारादुच्छ्रयाङ्गुलमिति, आवलिकाऽसंख्येयसमयात्मिका, जघन्ययुक्तासंख्यातकप्रमाणसमयात्मिकेति भावः, 'अङ्गुलं चावलिका' चादङ्गुलिकावलिके तयोर्भागं अंशमसंख्येय पश्यत्यवधिज्ञानी, किमुक्तं भवति, क्षेत्रतोऽङ्गुलासंख्येयभागमात्रं पश्यन् कालत आवलिकाया असंख्येयभागमतीतानागतं च पश्यति, एवं सर्वत्रापि क्षेत्रकालयोः परस्परं योजना कर्तव्या, क्षेत्रकालदर्शनं चोपचारेण द्रष्टव्यं, न खलु क्षेत्रं कालं च साक्षादवधिज्ञानी पश्यति तयोरमूर्तत्वात् रुपिद्रव्यविषयश्चावधिः एतावति क्षेत्रे काले च यानि द्रव्याणि तेषां च ये पर्यायास्तान् पश्यति, इति भावः, एवं सर्वत्र ज्ञेयं, क्रिया गाथा चतुष्टये स्वयमेव योजनीया, तथा द्वयोरङ्गुलावलिकयोः संख्येयौ भागौ पश्यति, अङ्गुलसंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकाया अपि संख्येयमेव भागं पश्यतीत्यर्थः तथाऽङ्गुलंअङ्गुलमात्रं क्षेत्रं पश्यन्नावलिकान्तः किञ्चिदूनामावलिकां पश्यति, आवलिकां चेत् कालतः पश्यति तदा क्षेत्रतोऽङ्गुलपृथ्क्त्वं, परिपूर्णाङ्गुलपृथक्त्वमानंक्षेत्रं पश्यति, पृथक्त्वंहि द्विप्रभृतिरानवभ्यः ॥३२॥

हत्थंमि मुहुत्तन्तो. दिवसंत्तंतो गाउयंमि बोद्धव्वो ।
जोयण दिवसपुहुत्तं. पक्खंतो पण्णवीसाओ ॥३३॥

गाथा-३३

हस्त इति हस्तविषयः क्षेत्रतोऽवधिः, कालतो मुहूर्त्तान्तः-भिन्नं मुहूर्तं पश्यतीत्यर्थः, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युच्यते. कालतो दिवसान्तः भिन्नं दिवसं पश्यन् क्षेत्रतो गव्यूते-गव्यूतविषयो बोद्धव्यः, योजने इति योजनविषयः क्षेत्रतोऽवधिः कालतो दिवसपृथक्त्वं पश्यति, कालतः पक्षान्तः भिन्नं पक्षं पश्यन् क्षेत्रतः पञ्चविंशतिं योजनानि ॥३३॥

भरहंमि अद्धमासो, जंबूदीवंमि साहिओ मासो ।
वासं च मणुअलोए, वासपुहुत्तं च रुयगंमि ॥३४॥

गाथा-३४

भरतक्षेत्रविषयेऽवधौ अर्धमास उक्तः, सकलभरतप्रमाणं क्षेत्रं पश्यन् कालतोऽतीतमनागतं पक्षं पश्यतीत्यर्थः, एवं जम्बूद्वीपविषयेऽवधौ साधिको मासो विषयत्वेन बोद्धव्यः, वर्षं च मनुष्यलोके-मनुष्यप्रमाणक्षेत्रविषयोऽवधिः, संवत्सरमतीतमनागतं च पश्यतीत्यर्थः, रुचकाख्यबाह्यद्वीपप्रमाणक्षेत्रविषयोऽवधिर्वर्षपृथक्त्वं च पश्यति ॥३४॥



गाथा-३५

संखिज्जंमि उ काले, दिवसमुद्दावि हुंति संखिज्जा ।
कालंमि असंखिज्जे, दीवसमुद्दा उ भइयव्वा ॥३५॥

संख्येयकाले इति संख्यातकालः, स च संवत्सरादिलक्षणोऽपि भवति, तु शब्दो विशेषणार्थः, किं विशिनष्टि? संख्येयकालो वर्षसहस्रात्परतो ज्ञेयः, तस्मिन् संख्येयकालेऽवधिगोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया द्वीपाश्च समुद्राश्च द्वीपसमुद्रास्तेऽपि संख्येया भवन्ति, अपिशब्दान्महानेकोऽपि अतिमहत एकदेशोऽपि, किमुक्तं भवति? संख्येये कालेऽवधिना परिच्छिद्यमाने क्षेत्रमपि, संख्येयद्वीपसमुद्रपरिमाणं परिच्छेद्यं भवति, तत्र यदि नाम अत्रत्यस्य यस्य नरादेरवधिरुत्पद्यते तस्य जम्बूद्वीपादारभ्य संख्येया द्वीपसमुद्राः परिच्छेद्याः अथवा द्वीपे समुद्रे वा संख्येय-योजनविस्तृते कस्यापि तिरश्चः संख्येयकालविषयोऽवधिरुत्पद्यते तदा यथोक्तक्षेत्रपरिमाणं तमेवैकं द्वीपं समुद्रं वा पश्यति. यदि पुनरसंख्येययोजनविस्तृते स्वयंभूरमणादिकद्वीपे समुद्रे वा संख्येयकालविषयोऽवधिः कस्याप्युपजायते तदानीं स प्रागुक्तपरिमाणं तस्य समुद्रस्य द्वीपस्य वैकदेशं पश्यति, यद्वा इहत्यतिर्यग्मनुष्यबाह्यावधिरेकद्वीपविषयो द्वीपाद्येकदेशविषयो वा वेदितव्यः, तथाकालेऽसंख्येय पल्योपमादिलक्षणेऽवधेर्विषये सति तस्यैव संख्येयकाल-परिच्छेदकस्यावधेः क्षेत्रतया परिच्छेद्या, द्वीपसमुद्रास्तु भाज्याः—विकल्पयितव्याः, कस्यचिदसंख्येया एव कस्यचित्संख्येयाः कस्यचिन्महानेकः कस्यचिदेकस्यैकदेशः, तत्रेह यदा मनुष्यस्या संख्येयकालविषयोऽभ्यन्तरावधिरुत्पद्यते तदानीमसंख्ये-यद्वीपसमुद्रास्तस्य विषयः यदा पुनर्बहिर्द्वीपे समुद्रे वा वर्त्तमानस्य कस्यचित्तिरश्चोऽसंख्येयकालविषयो जायते तदा तस्य संख्येया द्वीपसमुद्राः, अथवा यस्य मनुष्यस्यासंख्येयकालविषयो बाह्यद्वीपसमुद्रालम्बनो बाह्यावधिरुत्पद्यते तस्य

संख्येया द्वीपसमुद्राः, एवमेकद्वीपविषयोऽपि भावनीयः, यदा पुनः स्वयंभूरमणे समुद्रे द्वीपे वा कस्यचित्तिरश्चोऽवधि रसंख्येयकालविषयो जायते, तदा तस्यैव द्वीपस्य समुद्रस्य वा एकदेशविषयः, स्वयंभूरमणविषयमनुष्यबाह्यावधिर्वा तदेकदेशो विषयः. क्षेत्रप्रमाण पुनः सर्वत्रापि योजनापेक्षयाऽसंख्येयाख्यमेव. तदेवं यथा क्षेत्रवृद्धौ कालवृद्धिः कालवृद्धौ च क्षेत्रवृद्धिस्तथा परिस्थूरन्यायमङ्गीकृत्य प्रतिपादितम् ॥३५॥

सम्प्रति द्रव्यक्षेत्रकालभावानां यद्वृद्धौ यस्य वृद्धिरुपजायते यस्य च न तदभिधित्सुराह—

काले चउण्ह वुड्ढी, कालो भइयव्वु खित्तवुड्ढीए ।
वुड्ढीइ दव्वपज्जव, भइयव्वा खित्तकाला उ ॥३६॥



कालेऽवधिगोचरे वर्द्धमाने चतुर्णां—द्रव्यक्षेत्रकालभावाना वृद्धिर्भवति. ननु काले वर्द्धमानेऽवशिष्टत्रयाणामेव द्रव्यक्षेत्रभावानां वृद्धिर्भवतीत्येतावदेव वक्तुमुचित, कथमुच्यते—कालवर्द्धमाने चतुर्णां वृद्धिर्भवतीति ? उच्यते, सामान्याभिधानाददोषः, प्रथमं वर्द्धमानतया विशेषतः कालं निर्धार्य ततो वृद्धिसाम्याच्चतुर्णामपि वृद्धिसामान्येनाभिधानादिति भावः, अस्ति चायं न्यायः, एकस्मिन् रसनेन्द्रिये जिते पञ्चापि जितानीति, तथा क्षेत्रस्य वृद्धिः क्षेत्रवृद्धिस्तस्यां सत्यां कालो भजनीयः—कदाचिद्वर्द्धते कदाचिन्न, क्षेत्रं ह्यत्यन्तसूक्ष्मं कालस्तु तदपेक्षया स्थूरस्ततो यदि प्रभूतक्षेत्रवृद्धिस्तदा कालोऽपि वर्द्धते शेषकालं नेति द्रव्यपर्यायौ नियमतो वर्द्धते, द्रव्यं च पर्यायश्च द्रव्यपर्यायौ

तयोर्वृद्धौ सत्यां सूत्रे विभक्तिलोपः प्राकृतत्वात् भजनीयावेव क्षेत्रकालौ, तुरेवार्थे भिन्नक्रमश्च, तथैव योजितः, भजना चैवं कदाचित्तयोर्वृद्धिर्भवति कदाचिन्न, यतो द्रव्यं क्षेत्रादपि सूक्ष्मं, एकस्मिन्नपि नभःप्रदेशेऽनन्तस्कन्धावगाहनात्, द्रव्यादपि पर्यायः सूक्ष्मः, एकस्मिन्नपि द्रव्येऽनंतपर्यायसंभवात्, ततो द्रव्यपर्यायवृद्धौ क्षेत्रकालौ भजनीयौ, एवं द्रव्ये च वर्द्धमाने पर्याया नियमतः वर्द्धन्ते, प्रतिद्रव्यं संख्येयानामसंख्येयानां वा पर्यायाणां परिच्छेदसंभवात्, पर्याये तु वर्द्धमाने द्रव्यं भाज्यं, एकस्मिन्नपि द्रव्ये पर्यायविषयावधिवृद्धिसंभवात् ।

ननु जघन्यमध्यमोत्कृष्टभेदभिन्नयोरवधिसम्बन्धिनोः क्षेत्रकालयोरङ्गुलावलिकासंख्येयभागादिरूपयोः परस्परं प्रदेशसमयवृद्धया तुल्यत्वमुत हीनाधिकत्वं ? उच्यते, हीनाधिकत्वं, तथाहि—आवलिकाया असंख्येयभागे जघन्यावधिविषये यावन्तः समयास्तदपेक्षयाऽङ्गुलस्याङ्गुलस्यासंख्येयभागे जघन्यावधिविषय एव ये नभसः प्रदेशास्तेऽसंख्येयगुणाः, एव सर्वत्राप्यवधिविषयात्कालादसंख्येयगुणत्वमवधिविषयस्य क्षेत्रस्यावगन्तव्यम् ॥३६॥

अथ क्षेत्रस्येत्थं कालादसंख्येयगुणत्वं कथमवसीयते? उच्यते, सूत्रप्रामाण्यात्, सूत्रं चेदं दर्शयति—

सुहुमो य होइ कालो, तत्तो सुहुमयरं हवइ खित्तं ।
अंगुलसेढीमित्ते, ओसप्पिणीओ असंखेज्जा ॥३७॥

सूक्ष्मश्च—श्लक्ष्णश्च भवति कालः, चशब्दो वाक्यभेदक्रमोपदर्शनार्थः, यथा सूक्ष्मस्तावत्कालो भवति, यस्मादुत्पलपत्रशतभेदे प्रतिपत्रमसंख्येयाः समायाः प्रतिपाद्यन्ते, ततः सूक्ष्मः कालः, तस्मादपि कालात् सूक्ष्मतरं क्षेत्रं, यस्मादङ्गुलिश्रेणिमात्रक्षेत्रे—प्रमाणाङ्गुलैकमात्रे श्रेणिरूपे नभःखण्डे प्रतिप्रदेशं समयगणनयाऽसंख्यया अवसर्पिण्यस्तीर्थकृद्भिराख्याताः, इदमुक्तं भवति—प्रमाणाङ्गुलैकमात्रे एकैकप्रदेशश्रेणिरूपे नभःखण्डे यावन्तोऽसंख्येया-स्ववसर्प्पिणीषु समयास्तावत्प्रमाणाः प्रदेशा वर्त्तन्ते, ततः सर्वत्रापि कालादसंख्येयगुणं क्षेत्रं, क्षेत्रादपि चानन्तगुणं द्रव्यं, द्रव्यादपि चावधिविषयः पर्यायः संख्येयगुणोऽसंख्येयगुणो वा ॥३७॥ उक्तमवधेर्जघन्यादिभेदभिन्नं क्षेत्रमानं, क्षेत्रं चावधिगोचरद्रव्याधारद्वारेणावधेर्व्यपदिश्यते, ततः क्षेत्रस्य द्रव्याधिकरणत्वात्तदभिधानानन्तर अवधिपरिच्छेदयोग्यं द्रव्यमभिधातव्यं, अवधिश्च त्रिधा—जघन्यादिभेदात्, तत्र जघन्यावधिपरिच्छेदयोग्यं द्रव्यमभिधित्सुराह

तेआभासादव्वाण, अन्तरा इत्थ लहइ पट्ठवओ ।
गुरुलहुअअगुरुलहुअं, तंपि अ तेणेव निट्ठाइ ॥३८॥ गाथा—३८

तैजसं च भाषा च तयोर्द्रव्याणि, तेषां—तैजसभाषाद्रव्याणां अन्तरादित्यत्र अर्थवशाद्विभक्तिपरिणामः अन्तरे, अथवा अन्तरे इति पाठान्तरमेव, एतदुक्तं भवति—तैजसभाषाद्रव्याणामपान्तरालेऽत्र एतस्मिन् उभयायोग्यद्रव्यसमूहे तैजसभाषाभ्यामन्यदेव द्रव्य लभते—पश्यति, कः प्रस्थापकः ? प्रस्थापको नाम तत्प्रथमतयाऽवधिप्रारम्भकः, किं विशिष्टं

तदित्याह-गुरुलघ्वगुरुलघु, गुरु च लघु गुरुलघु, तथा न गुरुलघु अगुरुलघु तत्र यत्तैजसद्रव्यासन्नं तद्गुरुलघुपर्यायोपेतं यच्च भाषाद्रव्यासन्नं तदगुरुलघुपर्यायोपेतं तदपि चावधिज्ञानं प्रच्यवमानं सत्पुनस्तेनैव द्रव्येणोपलब्धेन सता निष्ठां याति, प्रच्यवते इति भावः, तदपि चेत्यत्रापिशब्दो यत्प्रतिपाति तत्रायं नियमो, न पुनरवधिज्ञानं प्रतिपात्येव भवतीति संदर्शनार्थः, च एवार्थः अवधिरेव एवं प्रच्यवते ॥३८॥ न शेषज्ञानानीति, कियत्प्रदेशं च तद्द्रव्यं ? यत्तैजसभाषाद्रव्याणामपान्तरालवर्त्तिजघन्यावधिप्रमेयमित्याशंक्य, तत्किल परमाण्वादिक्रमोपचयादौदारिकादिवर्गणानुक्रमतः प्रतिपादयितुं शक्यं अतस्तत्स्वरूपं प्रतिपिपादयिषुर्गाथाद्वयमाह—

ओरालविउव्वाहारतेअभासाणपाणमणकम्मे ।
अह दव्ववग्गणाणं, कमो विवज्जासओ खित्ते ॥३९॥

गाथा—३९

कम्मोवरिं धुवेयरसुण्णेयरवग्गणा अणंताओ ।
चउधुवणंतरतणुवग्गणा य मीसो तहाऽचित्तो ॥४०॥

गाथा—४०

औदारिकग्रहणादौदारिकशरीरग्रहणयोग्यवर्गणा गृहीताः, इह वर्गणाः सामान्यतश्चतुर्धा द्रव्यादिभेदात्, तत्र द्रव्यत एकपरमाण्वादीनां यावदनन्तपरमाणूनां क्षेत्रत एकप्रदेशावगाढानां यावदसंख्येयप्रदेशावगाढानां कालत एकसमयस्थितीनां

सर्वेषां परमाणूनां स्कन्धानां च एका वर्गणा, द्विसमयस्थितीनां सर्वेषां द्वितीया वर्गणा, त्रिसमयस्थितीनां तृतीयावर्गणा, एवमेकैकसमयवृध्द्या संख्येयसमयस्थितीनां परमाण्वादीनां संख्येया वर्गणाः, असंख्येयसमयस्थितीनां त्वसंख्येयावर्गणाः, भावत एकगुणकृष्णानां परमाणूनां स्कन्धानां च सर्वेषामेका वर्गणा, कृष्णवर्णगुणद्वययुक्तानां परमाण्वादीनां द्वितीया वर्गणा, एवमेकैकगुणवृध्द्या संख्येयकृष्णवर्णगुणानां संख्येया वर्गणाः, असख्येयकृष्णवर्णगुणानामसंख्येयाः, अनन्तकृष्णवर्णगुणानामनन्ताः एवं नीललोहितहारिद्रशुक्लेषु ४, सुरभीतरयोर्गन्धयोः ६, तिक्तकटुकषायाम्लमधुरेषु पञ्चसु रसेषु ११, कर्कशमृदुगुरुलघुशीतोष्णस्निग्धरूक्षेषु अष्टासु स्पर्शेषु १९, सर्वसंख्यया २०, स्थानेषु प्रत्येकमेकादीनां संख्येयगुणानां संख्येयाः असंख्येयगुणानामसंख्येयाः अनन्तगुणानामनन्ताः वर्गणा वाच्याः, तथा लघुगुरुपर्यायाणां बादरपरिणामान्वितवस्तूनामेका वर्गणा, अगुरुलघुपर्यायाणां सूक्ष्मपरिणतवस्तूनामेका वर्गणा, एते तु द्वे भवतः प्रकृतोपयोगः प्रदर्श्यते, तत्र समस्तलोकाकाशप्रदेशवर्त्तिनामेकैकपरमाणूनामेका वर्गणा, समस्तलोकवर्त्तिनां द्विप्रदेशिकस्कन्धानां द्वितीया, एवं त्रिप्रदेशिकानां तृतीया एवमेकोत्तरया वृद्धय तावज्ज्ञेयं यावत् संख्येयप्रदेशिकस्कन्धानां संख्येयाः असख्येयप्रदेकशिस्कन्धानामसंख्येयाः अनंतप्रदेशिकस्कन्धानामनन्ताः खल्वग्रहणयोग्या वर्गणा विलंध्य विशिष्टपरिणामयुक्ता औदारिकशरीरग्रहणप्रायोग्या अनन्ता वर्गणा भवन्ति, तत एकोत्तरप्रदेशवृद्ध्या वर्द्धमानाः प्रचुरद्रव्यत्वात्सूक्ष्मतरपरिणामत्वाचौदारिकस्याग्रहणप्रायोग्या अनंता वर्गणा भवन्ति, ताश्च स्वल्पपरमाणुनिष्पन्नत्वाद्बादरपरिणामयुक्तत्वाच्च वैक्रियस्याप्यग्रहणप्रायोग्याः पुनः प्रदेशवृद्ध्याऽनन्तवर्गणाः, ताश्च प्रचुरद्रव्यनिष्पन्नत्वात्सूक्ष्मतरपरिणामोपेतत्वाचौदारिक-

स्याप्यग्रहणप्रायोग्याः, परं वैक्रियवर्गणाप्रत्यासन्नतया तदाभासत्वाद्वैक्रियशरीराग्रहणप्रायोग्या इति व्यपदिष्टाः, तदनन्तरं एकोत्तरवृद्धया वर्धमानाः प्रचुरद्रव्यनिर्वृत्तत्वात्तथाविधसूक्ष्मपरिणामवत्वाच्च वैक्रियशरीरस्य ग्रहणप्रायोग्या अनन्ता वर्गणा भवन्ति, तत ऊर्ध्वमेकोत्तरवृद्धया प्रवर्द्धमानाः प्रचुरद्रव्यारब्धत्वात् सूक्ष्मतरपरिणामत्वाच्च वैक्रियस्याग्रहणप्रायोग्या अनन्ता वर्गणाः, तासां चोपर्येकोत्तरवृद्धया वर्द्धमानाः स्वल्पद्रव्यत्वनिष्पन्नत्वाद्बादरपरिणामत्वाच्चाहारकशरीरस्याग्रहणप्रायोग्या अनन्ता वर्गणाः, तदनन्नतरमेकोत्तरवृद्धया वर्द्धमानाः प्रचुरद्रव्यनिष्पन्नत्वात्तथाविधसूक्ष्मपरिणामत्वाच्चाहारकशरीरस्य ग्रहणप्रायोग्या अनन्ता वर्गणाः ततोऽप्येकोत्तरवृद्धया वर्द्धमाना बहुतमद्रव्यनिष्पन्नत्वादतिसूक्ष्मपरिणामत्वाच्चाहारकशरीरस्य ग्रहणप्रायोग्याः अनन्ता वर्गणाः एवं तैजसस्य ४, भाषायाः ५, आनप्राणयोः ६, मानसः ७, कर्मणश्च ८, यथोत्तरं वृद्धयुपेतानां प्रत्येकमनन्तानामयोग्यानां योग्यानां पुनरयोग्यानां वर्ग्गणानां पृथक् पृथक् त्रयं त्रयं वक्तव्यं, कथं पुनरकैकस्यौदारिकदेस्त्रयं त्रयं गम्यते ? उच्यते, तैजसभाषाद्रव्यापान्तरालवर्त्युभयायोग्यद्रव्यावधिगोचराभिधानात्, अथ एष द्रव्यवर्गणानां क्रमः—परिपाटी इह स्वजातीयवस्तुसमुदायो वर्गणा, वर्गः—समुदायो राशिरिति पर्यायाः, तथा विपर्यासतो—विपर्यासेन क्षेत्रे—क्षेत्रविषयो वर्गणाक्रमो वेदितव्यः. तद्यथा—परमाणूनां द्व्यणुकाद्यनन्ताणुकपर्यंतस्कन्धानां चैकाकाशप्रदेशावगाहिनां सर्वेषामेकावर्गणा, द्व्यणुकाद्यनंताणुपर्यंतस्कन्धानां द्विप्रदेशावगाहिनां द्वितीया वर्गणा, त्र्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानां त्रिप्रदेशावगाहिनां तृतीया वर्गणा, एवमेकैकाकाशप्रदेश वृद्धय संख्येयप्रदेशावगाहिनां

स्कन्धानां संख्येया वर्गणाः, असंख्येयप्रदेशावगाहिनां स्कन्धानामसंख्येयाः, ताश्चैकैकाकाशप्रदेशवृद्ध्या वर्द्धमानाः खलु असंख्येया वर्गणाः विलङ्घ्य कर्मणः प्रायोग्या असंख्येया वर्गणा भवन्ति, ततोऽनन्तरमल्पपरमाणुनिष्पन्नत्वाद् बादरपरिमाणत्वेन बाह्याकाशप्रदेशावगाहित्वाच्च तस्यैव कर्मणोऽग्रहणप्रायोग्या एकैकाकाशप्रदेशवृद्ध्या असंख्येया वर्गणाः, एवमेकैकाकाशप्रदेशवृद्ध्या वर्द्धमाना मनसोऽप्यसंख्येया अग्रहणवर्गणाः, पुनरेतावत्य एव तस्य ग्रहणयोग्या वर्गणाः, पुनरेतावत्प्रमाणा एव तस्यैवाग्रहणप्रायोग्या वर्गणाः, एवमानप्राणयोर्भाषायास्तैजसस्याहारकस्य वैक्रियस्यौदारिकस्य चायोग्ययोग्यावर्ग्गणानां प्रतिलोमं क्षेत्रतोऽपि प्रत्येकं त्रयं त्रयमायोज्यं, 'परं परं सूक्ष्मं, प्रदेशतोऽसंख्येयगुण'—मिति (तत्त्वा. अ. २. सू. ३८—३९) ॥ अनन्तरगाथायां कर्मद्रव्यवर्गणाः प्रतिपादिताः,

सम्प्रति प्रदेशोत्तरवृद्ध्या तदग्रहणप्रायोग्याः प्रदर्श्यन्ते—क्रियते—मिथ्यात्वादिसचिवैर्जीवैर्निर्वर्त्त्यते इति कर्म्म, कर्म्मण उपरि कर्मोपरि, 'नाम नाम्नैकार्थ्ये समासो बहुल' मिति समासः, कर्माग्रहणप्रायोग्यवर्ग्गणानामुपरीति भावः, ध्रुवेति ध्रुववर्गणा अनन्ता, तद्यथा—कर्माग्रहणप्रायोग्यवर्गणानामुपरि एकाधिकपरमाणूपचितातिसूक्ष्मपरिणामाऽनन्तपरमाण्वात्मिका प्रथमा ध्रुववर्गणा भवति, एकोत्तरवृद्ध्या वर्द्धमाना एता अपि ध्रुववर्गणाऽनन्ता ज्ञेयाः, ध्रुवा इति नित्या, लोकव्यापितया सर्वकालावस्थायिन्य इति भावः, अन्तदीपक चेदं, एतासां ध्रुवत्वभणनेन प्रागुक्ता अपि

कर्मवर्गणान्ताः सर्वा एव वर्गणा ध्रुवा इति ज्ञेयं, तासामपि सर्वत्र लोके सदैवाव्यवच्छेदात्, अन्यच्चैता ध्रुववर्गणा वक्ष्यमाणाश्चाध्रुवाः सर्वा अप्यग्रहणप्रायोग्या वर्गणा अतिबहुद्रव्योपचित्वेनातिसूक्ष्मपरिणामत्वेन च सर्वजीवैरौदारिकादि-भावेनाग्रहणात् तदनंतरमित्थमेवैकोत्तरवृद्ध्या वर्द्धमाना ध्रुववर्गणाभ्य इतरा अध्रुववर्गणा अनन्ता भवन्ति, एताश्च तथाविधपुद्गलपरिणावैचित्र्यात् कदाचिल्लोके न भवन्त्यपि, तत एता अध्रुवा—अशाश्वत्यः, कदाचिन्न सन्त्यपीति भावः, तथा 'सुन्ना' इति सूचनात् सूत्रं, एकोत्तरवृद्ध्या कदाचित् शून्यानि—व्यवहितानि अन्तराणि यासां ताः शून्यान्तराः ताश्च वर्गणाश्च शून्यान्तरवर्गणाः, एता एकोत्तरवृद्ध्या निरन्तरमनंताः सदैव प्राप्यन्ते, परं कदाचिदेता-स्वेकोत्तरवृद्धिरन्तराऽन्तरा त्रुट्यति, एताः शून्यान्तरवर्गणा अप्यनन्ताः, इतरग्रहणादशून्यान्तर वर्गणा गृह्यन्ते, एता ह्येकोत्तरवृद्ध्या निरन्तरमेव लोके सदैव प्राप्यन्ते, न पुनरेकोत्तरवृद्धिहानिरपान्तराले, तत एता अशून्यान्तरवर्गणाः प्रदेशोत्तरवृद्ध्याऽनन्ताः, अशून्यान्तरावर्गणानामुपरि ध्रुवानन्तराणि चत्वारि वर्गणा द्रव्याणि भवन्ति, ध्रुवाणि च सर्वकालभावित्वादनन्तराणि च निरन्तरैकोत्तरवृद्धिभावत्वात् ध्रुवानन्तराणि, किमुक्तं भवति? आद्या ध्रुवानन्तरवर्गणाः प्रथमतोऽनंता भवन्ति, तदनन्तरमेतावत्यो द्वितीयाः, ततस्तृतीयास्ततश्चतुर्थ्यो वाच्याः, ध्रुववर्गणाः प्रागप्युक्ताः परं ताभ्य एता भिन्न एव, न पुनस्तास्वन्तर्भवन्ति, अतिसूक्ष्मपरिणामत्वादबहुद्रव्योपचितत्वाच्च, एतासां चतसृणां ध्रुववर्गणानां प्रत्येकमपान्तराले एकोत्तरवृद्धिहानिर्ज्ञेया, अन्यथा निरन्तरमेकोत्तरवृद्धिसंभवे चातुर्विध्यासंभवात्, अन्यद्वा किञ्चिद्वर्णादि

गाथा—३९

गाथा—४०

वैचित्र्यकारण तद्बहुश्रुता एव विदन्ति, एवं तनुवर्गणानामपि भाव्यं, चतसृणां ध्रुववर्गणानामुपरि प्रत्येकमेकोत्तर-वृद्धियुक्तानन्तवर्गणात्मिकाश्चतस्रस्तनुवर्गणा भवन्ति, तनूनां—औदारिकादिशरीराणां भेदाभेदपरिणामाभ्यां योग्यत्वाभिमुखा वर्गणास्तनुवर्गणाः, भेदाभेदपरिणामाभ्यामिति कोऽर्थ? यावद्भिर्पुद्गलैस्तनुवर्गणा स्कन्धा निष्पद्यन्ते तेभ्यो यदा केचित् पुद्गला विभिद्य पृथग् भवन्ति, अन्येत्वागन्तुकाः समागत्याभेदेन परिणमन्ति इत्याभ्यां भेदाभेदपरिणामाभ्या-मेतास्तनुवर्गणा औदारिकादियोग्यबादरपरिणामाभिमुखा भवन्तीत्यर्थः, अथवा वक्ष्यमाणा मिश्रस्कन्धाचित्तस्कन्धद्वयस्य तनुः देहः शरीर मूर्तिरिति यावत् तद्योग्यत्वाभिमुखा वर्गणास्तनुवर्गणाः, तदनन्तरं मिश्रः स्कन्धो भवति, सूक्ष्म एव सन् ईषद्बादरपरिणामाभिमुखः सूक्ष्मत्वबादरत्वपरिणाममिश्रणात् मिश्रस्कन्धः, तथेत्यानन्तर्ये. अचित्त इति पदैकदेशे पदसमुदायोपचाराद् अचित्तमहास्कन्धाः, स च विस्रसापरिणामवैचित्र्यात् केवलिसमुद्घातगत्या चतुर्भिः समयैः सकललोकमापूरयति, संहरणमपि चतुर्भिरेव, नन्वचित्तत्वाव्यभिचारादचित्तविशेषणमनर्थकं, न केवलिसमुद्घात-सचित्तकर्मपुद्गलदललोकव्यापि महास्कन्धव्यवच्छेदपरतया विशेषणस्य सार्थकत्वात्, एष एवाचित्तमहास्कन्धः सर्वोत्कृष्टप्रदेशस्कन्ध इति केचिद् व्याचक्षते तदसम्यक्, यतः प्रज्ञापनायामवगाहनस्थितिभ्यामसंख्येयभागहीनादिभेदाच्चतुः स्थानपतिता उक्ता उत्कृष्टपुद्गलनिर्वृत्ताः स्कन्धाः, अमी पुनरचित्तमहास्कन्धाः कालभेदेन बहवोऽपि जायमाना अवगाहनास्थितिभ्यां तुल्या एव, यतस्तेषां सर्वेषां स्थितिरष्टसामयिका, अवगाहना चालोकव्याप्तिलक्षणा, किञ्च

प्रज्ञापनायामुत्कृष्टप्रदेशिकस्कन्धोऽष्टस्पर्शः पठ्यते, अचित्तमहास्कन्धः पुनश्चतुःस्पर्शः एव, तस्मात्प्रज्ञापनोक्तस्थित्यादि-वैषम्यभाजाऽष्टस्पर्शाश्चान्येऽप्युत्कृष्टप्रदेशिकाः स्कन्धाः सन्तीति नियमतः प्रतिपत्तव्यम् ॥४०॥ इह प्राक् तैजसभाषाद्रव्याणाम-पान्तराले गुरुलघु अगुरुलघु च जघन्यावधिप्रमेयं द्रव्यमुक्तं, जघन्यावधिश्च द्विधा गुरुलघुद्रव्यारब्धोऽगुरुलघुद्रव्यारब्धश्च, तत्र गुरुलघुद्रव्यारब्धश्च कोऽपि तान्येव तैजसप्रत्यासन्नानि गुरुलघुद्रव्याणि दृष्ट्वा विध्वंसमापद्यते, यस्तु विशुद्धिमासादयन् प्रवर्द्धते सोऽधस्तनानि तान्येव गुरुलघून्यौदारिकादिद्रव्याणि दृष्ट्वा ततोऽधिकतरां विशुद्धिमासादयन् क्रमेणैवागुरुलघूनि भाषाद्रव्याणि पश्यति, अगुरुलघुद्रव्यसमारब्धोऽपि कश्चिदूर्ध्वं हि वर्द्धमान इतराण्यपि तत्कालं गुरुलघून्यौदारिकादीनि पश्यति, तत्र किं गुरुलघु किंवा अगुरुलघु इति शङ्कायां तत्स्वरूपप्रतिपादनार्थमाह—

ओरालिअवेउव्विअआहारगतेअ गुरुलहू दव्वा ।
कम्मगमणभासाई, एआइ अगुरुलहुआई ॥४१॥

गाथा–४१

औदारिकवैक्रियाहारकतैजसद्रव्याणि अपराण्यपि तैजसद्रव्यप्रत्यासन्नानि तदाभासानि बादररूपत्वाद् गुरुलघूनि—गुरुलघुस्वभावानि, कार्मणमनोभाषाद्रव्याणि तु आदिशब्दात् प्राणापानद्रव्याणि भाषाद्रव्यावर्गिवर्त्तीनि भाषाभासानि अपराण्यपि च परमाणुद्व्यणुकादीनि व्योमादीनि च एतानि चागुरुलघूनि अगुरुलघुस्वभावानि, अथवा भावार्थं उच्यते, इह व्यवहारश्चतुर्धा द्रव्यमिच्छति, तद्यथा—अधोगमनस्वभवं गुरुकं लेष्ठ्वादिवत् ऊर्ध्वगतिस्वभावं लघुक

प्रदीपशिखावत्, तीरश्चीनगतिशीलं गुरुलघुवाय्वादिवत्, निश्चलस्वभावं त्वगुरुलघु व्योमादिवत्, उक्तञ्च "गुरुअं लहुअं उभयं नोभयमिअ वावहारिअनयस्स। दव्वं लेट्ठू १ दीवो २ वाऊ ३ वोमं ४ च जहासंखं ॥१॥" निश्चयस्तु मन्यते नाऽयमेकान्तः अधोगमनस्वभावं गुर्वेव भवतीति, लघुनाऽप्यधोगतिपरिणतिनाऽणुना व्यभिचारात्, नाप्यूर्ध्वगतिस्वभावं लघ्वेव, एरण्डादिफलानां मुक्तानां चोर्ध्वगत्या व्यभिचारात्, तस्मादिह निश्चयनयमाश्रित्यौदारिकादीनि सूक्ष्मपरिणामत्वादगुरुलघुत्वेन चेति ॥४१॥ वक्ष्यमाणगाथाद्वयसम्बन्ध एवं—पूर्वं किल क्षेत्रकालसम्बधिनोः केवलयोरङ्गुलावलिकासंख्येयादिविभागकल्पनया परस्परोपनिबन्ध उक्तः, सम्प्रति तयोरेवोक्तलक्षणेन द्रव्येण सह परस्परोपनिबन्ध उपदर्श्यते—

संखिज्ज मणोदव्वे, भागो लोगपलियस्स बोद्धव्वो ॥
संखिज्ज कम्मदव्वे, लोए थोवूणगं पलियं ॥४२॥

गाथा—४२

मनोवर्गणागतं—मनःपरिणामयोग्य मनोद्रव्यं पश्यन्नवधिः क्षेत्रतो लोकस्य संख्याततमं भागं, कालतस्तु पल्योपमस्य संख्याततमं भागं पश्यति, तथा कर्मवर्गणागतं कर्मपरिणामयोग्यं कर्मद्रव्यं तद्विषयेऽवधौ संख्येया लोकपल्योपमयोर्भागा विषयत्वेन ज्ञेयाः, इदमुक्तं भवति—कर्म्मवर्गणाद्रव्यं पश्यन्नवधिर्लोकपल्योपमयोः पृथक् पृथक् संख्येयान् भागान् पश्यति, लोकश्चतुर्दशरज्ज्वात्मकः, लोकविषयेऽवधौ कालतः स्तोकोनं पल्योपम विषयतया विज्ञेयं, इदमत्र हृदयं क्षेत्रतः समस्तं लोकं पश्यन् कालतः स्तोकोनं पल्योपमं पश्यति, ननु द्रव्येण सह क्षेत्रकालयोरुपनिबन्धे

प्रस्तुते केवलयोरुपनिबन्धप्ररूपणमसमीचीनं, नैष दोषः, द्रव्योपनिबन्धस्यात्रापि सामर्थ्यप्रापितत्वात्, तथाहि—पूर्वं 'काले चउण्ह वुड्ढि' इत्युक्तं, कालवृद्धिश्चात्र अनन्तरोक्तकर्मद्रव्यदर्शकापेक्षया प्रतिपादिता, ततोऽस्य समस्तलोकस्तोकोनपल्योपमदर्शिनः सामर्थ्यात्कर्मद्रव्योपरि यत् किमपि ध्रुववर्गणादि तद्विषयत्वेन द्रष्टव्यं, अत एव उपर्युपरि द्रव्याणि पश्यतः क्षेत्रकालवृद्धिक्रमेण परमावधिसम्भवोऽप्यनुमेयः ॥४२॥

तेयाकम्मसरीरे, तेआदव्वे अ भासदव्वे अ ॥
बोद्धव्वमसंखिज्जो दीवसमुद्दा य कालो अ ॥४३॥

शरीरशब्दः प्रत्येकं संयोज्यः तैजसशरीरे कार्मणशरीरे च, एतद्विषयेऽवधौ, तथा तैजसवर्गणाद्रव्यविषये भाषावर्गणाद्रव्यविषये चावधौ क्षेत्रतः प्रत्येकमसंख्येयः द्वीपसमुद्राः कालश्चासंख्येयः पल्योपमासंख्येयभागरूपो विषयत्वेन ज्ञेयः, इह यद्यप्यविशेषेणोक्तः तथापि तैजसशरीरकार्मणशरीरस्य सूक्ष्मत्वात्तद्दर्शिन इदमेव द्वीपसमुद्रकालासंख्येयत्वं बृहद् द्रष्टव्यं, कार्मणशरीरादप्यबद्धानां तैजसवर्गणाद्रव्याणां सूक्ष्मत्वाद् बृहत्तरं, तेभ्योऽपि भाषाद्रव्याणां, ननु पूर्वं कर्मद्रव्यदर्शिनः प्रत्येकं लोकपल्योपमभागाः संख्येया विषयत्वेनोक्ताः, अत्र तु कार्मणशरीरद्रव्यदर्शिनः किमिति स्तोकावेव क्षेत्रकालौ विषयत्वेनाभिहिताविति ?, उच्यते, पूर्वं कर्मद्रव्याणि कर्मवर्गणागतानि जीवेन शरीरतया बद्धानि उक्तानि, अत्र शरीरतया बद्धानि, बद्धानि चाबद्धेभ्यो बादराणि भवन्ति, अव्यूततन्तुभ्यो व्यूततन्तुषु तथा दर्शनात्, ततः कार्मणशरीरदर्शिनः स्तोकौ क्षेत्रकालावुक्ताविति, परस्त्वाह—तैजसद्रव्याणि पश्यतोऽसंख्येया द्वीपसमुद्राः कालश्चासंख्येया

विषयः तर्हि यत् प्रागुक्तं 'तैजसभाषापान्तरालद्रव्यदर्शिनोऽङ्गुलावलिकासंख्येयभागादिक्षेत्रकालमानं' तद्विरुध्यते, नैष दोषः, इह विचित्रा वस्तुशक्तयः, ततोऽपान्तरालद्रव्याणि प्रारम्भकस्यावधेर्विषयः तैजसद्रव्याण्यधिकृत्येत्यविरोधः, ननु जघन्यावधिप्रमेयं प्रतिपादयता गुरुलघ्वगुरुलघु च द्रव्यं पश्यतीत्युक्तं, न सर्वमेव, विमध्यमावधिप्रमेयमपि चाङ्गुलावलिकासंख्येयभागाद्यभिधानान्न सर्वद्रव्यरूपं, तत्रस्थानामेव दर्शनात् ॥४३॥ तत उत्कृष्टावधिरपि किमसर्वद्रव्यरूपमालम्बनमाहोश्वित् सर्वद्रव्यमालम्बनमिति संशयः, तदपनोदार्थमाह—.

एगपएसोगाढं परमो ही लहइ कम्मगशरीरं ।
लहइ अ अगुरुलघुअं, तेयसरीरे भवपुहुत्तं ॥४४॥



प्रकृष्टो देशःप्रदेशः एकश्चासौ प्रदेशश्च तस्मिन्नवगाढ । व्यवस्थितं एकप्रदेशावगाढं परमाणुद्व्यणुकादिद्रव्यं परमावधिरुत्कृष्टावधिर्लभते पश्यति अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युक्तं तथा कार्मणशरीरं च लभते, ननु परमाणुद्व्यणुकादिद्रव्यमनुक्तं कथ गम्यने तदालंबनत्वेनेति ततश्चोपात्तमेव कार्मणमिदं भविष्यति, न, तस्यैक प्रदेशशावगाहित्वामनुपपत्तेः, तथा 'लभते चागुरुलघु' च शब्दाद्गुरुलघु च. जात्यपेक्षया सर्वत्रैकवचनं । ततश्च सर्वाण्यप्येकप्रदेशावगाढानि कार्मणशरीराणि अगुरुलघूनि गुरुलघूनि च द्रव्याण्यसौ पश्यतीति प्रतिपत्तव्यं । तथा तैजसांगविषयेऽवधौ कालतो भवपृथक्त्वं पश्यति य एव प्राक् तैजसं पश्यतोऽसंख्येयकाल उक्तः स एव भवपृथक्त्वेन विशिष्यते देवगत्यादिगमनादत्राप्यसंख्येयो ज्ञेयः, स च पल्योपमाऽसंख्येयभागकालो नाऽधिकः, एतन्मध्य एव

भवपृथक्त्वं न त्वेक प्रदेशावगाढस्य परमाण्वादेरतिसूक्ष्मत्वात्तदुपलम्भे बादराणां कार्मणशरीरादीनामुपलंभो गम्यत एव, ततस्तेषां पृथगुपन्यासो व्यर्थः, एतदयुक्तं, यः सूक्ष्मं परमाण्वादि पश्यति तेन बादरकार्मणशरीरादिकमऽवश्यं द्रष्टव्यं यो वा बादरं पश्यति तेन सूक्ष्ममप्यवश्यं ज्ञातव्यमिति न कोपि नियमः। यतः "तेआभासादव्वाण"मित्यादिवचनात्प्रथमोत्पत्तावगुरुलघुद्रव्यं पश्यन्नप्यवधिर्न गुरुलघूपलभतेऽन्यद्वातिस्थूरमपि घटादिकं न लभते, तथा मनःपर्यायज्ञानी मनोद्रव्याणि सूक्ष्माण्यपि पश्यति, चिंतनीयं तु घटादिकं स्थूलमपि न पश्यति तत एवं विज्ञानवैचित्र्यः संभवे सति संशयव्यवच्छेदार्थं एकप्रदेशावगाढग्रहणे सत्यपि शेपविशेषणोपादानमदुष्टमेव ॥४४॥ तदेवं परमावधेर्द्रव्यरूपो विपय उक्तोऽधुना क्षेत्रकालौ तद्विपयतया प्रतिपिपादयिपुराह—

परमोही असंखिज्जा, लोगमित्ता समा असंखिज्जा।
रुवगयं लहइ सव्वं, खित्तोवमिअं अगणिजीवा ॥४५॥

गाथा—४५

परमावधिः क्षेत्रतोऽसंख्येयनि लोकमात्राणि खण्डानीति गम्यते—लभ ये। कालतस्तुतेसमा—उत्सर्पिण्यवसर्पिणीरसंख्येया एव लभते, तथा द्रव्यतो रूपगतं मूर्त्तं द्रव्यजातं लभते पश्यति सर्वं, भावतस्तु प्रतिद्रव्यं संख्येयानसंख्येयान्वा पर्यायानिति यदुक्तमसंख्येयानि लोकमात्राणि खण्डानि परमावधिः पश्यतीति तदसंख्येयकमूनमधिकं च कोऽपि संकल्पयेदतो नियतपरिमाणप्रतिपादनार्थमाहः—उपमीयतेऽनेनेत्युपमितं क्षेत्रस्योपमितं—क्षेत्रप्रमाणकारिणः प्रागभिहिता एवाऽग्निजीवाः, इदमुक्तं स्यात् उत्कृष्टावधिविपयत्वेन क्षेत्रतो येऽसंख्येया लोका उक्ताः ते प्रागभिहित—

स्वावगाहनव्यवस्थापितोत्कृष्टासंख्येयसूक्ष्मबादराऽग्निजीवसूच्या परमावधिमतो जीवस्य सर्वतो भ्राम्यमाणया यत् प्रमाणक्षेत्रं व्याप्यते तत्प्रमाणा विज्ञेया । परमावधिकलितश्च नियमादंतर्मुहूर्त्तमात्रेण केवलालोकपद्वीमासादयति ॥४५॥

तदेवं मनुष्यानधिकृत्य क्षायोपशमिकोऽनेकप्रकार उक्तोऽवधिः सम्प्रति तिरश्चोऽधिकृत्य तं प्रतिपपादयिषुराहः—

आहारतेयलंभो, उक्कोसेणं तिरिक्खजोणीसु ॥
गाउय जहण्णमोही, नरएसुउ जोयणुक्कोसो ॥४६॥



आहारश्च तेजश्च आहारतेजसी तयोलार्भः प्राप्तिः—परिच्छित्तिः, सूत्रे च लम्भ इति निर्देशः प्राकृतत्वात्, आहारतेजोग्रहणमुपलक्षण, तेन यान्यौदारिकवैक्रियाहारकतैजसद्रव्याणि यानि च तदन्तरालेषु तदयोग्यानि तेषां सर्वेषामपि परिग्रहः, योनियोनिमतोरभेदोपचारादुत्कर्षतस्तिर्यग्योनिकसत्वविषयोऽवधिः, स औदारिकवैक्रियाहारकतेजोद्रव्याणि तदन्तरालद्रव्याणि च सर्वाणि पश्यतीति, एतद्द्रव्यानुसारेण क्षेत्रकालभावा अपि परिच्छेद्यतया स्वयमभ्यूह्याः ॥

अथ भवप्रत्ययोऽवधिः प्रोच्यते, स च सुरनारकाणामेव, स्यादल्पत्वाश्चादौ नारकाणां, इह नरका आश्रयाः आश्रयाश्रयिणोरभेदापचारात्, नरकेषु पुनरुत्कृष्टेष्वेव मध्ये जघन्योऽवधिः क्षेत्रतो गव्यूतं पश्यति, स च सप्तमपृथिव्यां, उत्कृष्टस्तु योजनं पश्यति, स चाद्यपृथ्व्यां, इत्थंभूतक्षेत्रानुसारेण द्रव्यादयः स्वयं भाव्याः ॥४६॥ तदेवं सामान्येन नारकजातिमधिकृत्याभिहितमुत्कृष्टमवधिक्षेत्रपरिमाणम्, अथ तदेवं रत्नप्रभादिपृथिवीविभागेनाह—

चत्तारि गाउयाइं, अद्धुट्ठाइं तिगाउया चेव ॥
अड्ढाइज्जा दुण्णि य, दिवड्ढमेगं च निरएसु ॥४७॥



उत्कृष्टावधिक्षेत्रं चतुर्गव्यूतादि एकगव्यूतं च यथासंख्यं सप्तस्वपि पृथ्वीषु ज्ञेयं, उत्कृष्टमपि चार्द्धगव्यूतोनं जघन्यं स्यात्, तथाहि—रत्नप्रभायामुत्कृष्टमवधिक्षेत्रमानं चत्वारि गव्यूतानि जघन्यमर्द्धचतुर्थानि, शर्कराप्रभायामुत्कृष्टमर्द्धचतुर्थानि सार्द्धानि त्रीणि गव्यूतानि जघन्यं त्रीणि गयून्तानि इत्यादिः, शेषाऽक्षरार्थः, त्रिगव्यूतमर्द्धतृतीयानि द्वे अध्यर्द्धं एकं चेति, प्राग् जघन्यं गव्यूतमिति यदुक्तं तदुत्कृष्टजघन्यापेक्षया, इदमत्राकूतं—सप्तस्वपि पृथिवीषु यद् गव्यूतचतुष्टयादिकमुत्कृष्टमवधिक्षेत्रपरिमाणं तन्मध्ये सप्तमपृथिव्यां गव्यूतमवधिक्षेत्रं स्वस्थाने उत्कृष्टमपि शेषपृथिव्युत्कृष्टापेक्षया-सर्वस्तोकत्वाज्जघन्यमुक्तं, न चैतत् स्वमनीषिका विज्जृम्भितं, यत आह—भाष्यकृत्—"अद्धुट्ठगाइयाइं" (वि.६९४) उक्तार्थां वृत्तावव्याख्याता च ॥४७॥ अथ देवावधिं गाथात्रयेणाह—

सक्कीसाणा पढमं, दुच्चं च सणंकुमारमाहिंदा ॥
तच्चं च बंभलंतग, सुक्कसहस्सारय चउत्थीं ॥४८॥



सौधर्मेशानकल्पदेवेन्द्रौ प्रथमां रत्नप्रभाभिधानां पृथ्वीं पश्यन्तीति, शक्रेशानग्रहणं चोपलक्षणं तेन सौधर्मेशानकल्पनिवासिदेवाः परिगृह्यन्ते, एवं सर्वत्र ज्ञेयं, द्वीतीयां च पृथिवीं सनत्कुमारमाहेन्द्रौ—तृतीचतुर्थकल्पदेवेशौ, एवं तृतीयां

च ब्रह्मलान्तकदेवेन्द्रौ शुक्रसहस्रारदेवेन्द्रौ चतुर्थीं पृथ्वीं पश्यन्तीति सर्वत्र द्वितीयगाथागतक्रिया योज्या, तामेव च पृथ्वीं सर्वत्र विशुद्धतरां बहुपर्यायां चोत्तरोत्तरा देवाः पश्यन्ति, तेषां विमलविमलतरावधिसद्भावात् ॥४८॥

आणायपयाणयकप्पे, देवी पासंति पंचमिं पुढवीं ।
तं चेव आरणच्चुय, ओहीनाणेण पासंति ॥४९॥

गाथा–४९

आणतप्राणतयोः कल्पयोः सम्बन्धिनो देवा पश्यन्ति पञ्चमीं पृथ्वीं तामेवारणाच्युतयोः सम्बधिनो देवा अवधिज्ञानेन पश्यन्ति स्वरूपकथनमेवेदं विमलतरां बहुतरां च ॥४९॥

छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला ।
संभिण्णलोगनालिं, पासंति अणुत्तरा देवा ॥५०॥

गाथा–५०

अधस्त्यमध्यमग्रैवेयकविमानवासिनो देवाः षष्ठीं पश्यन्ति, सप्तमीं च पृथ्वीं उपरितनग्रैवेयकनिवासिनः, सम्भिन्नां–किञ्चिदूनां चतसृष्वपि दिक्षु स्वज्ञानेन व्याप्तां लोकनाडीं चतुर्दशरज्जुप्रमाणां कन्याचोलकसंस्थानामनुत्तर-विमानवासिनो देवा पश्यन्ति, एवं क्षेत्रतो दवानां भवप्रत्ययावधेर्विषय उक्तः, एतदनुसारेण द्रव्यादिविषयोऽपि ज्ञेयः, एवमधो वैमानिकावधिक्षेत्रप्रमाणमभिधायेदानींतिर्य गूर्ध्वं च तदेव प्रदर्शयन्नाह ॥५०॥

एएसिमसंखिज्जा, तिरियं दीवा य सागरा चेव ।
बहुअअरं उवरिमगा, उड्ढं सगंकप्पथूभाई ॥५१॥

एतेषां सौधर्मादिदेवानामसंख्येयास्तिर्यग् द्वीपाश्च सागराश्च अवधिपरिच्छेद्यतया ज्ञेया इति वाक्यशेषः, तदेव द्वीपसमुद्रासंख्येयकं बहुतरकं प्रभूततरं पश्यन्ति उपर्युपरिदेवलोकनिवासिनो देवाः, ऊर्ध्वं स्वकल्पस्तूपाद्येव यावत्, आदिशब्दात् ध्वजादिग्रहः, जघन्यतः पुनरमी सर्वेऽपि देवाः सौधर्मादयोऽनुत्तरविमानवासिपर्यन्ता अङ्गुलासंख्येयभागमात्रं क्षेत्रं पश्यन्ति, नन्वङ्गुलासंख्येयभागमात्रो जघन्योऽवधिस्तिर्यग् मनुष्येष्वेवाशेषाणां मध्यम एवेति वक्ष्यति तत्कथं वैमानिकानां सर्वजघन्य उक्तः? उच्यते, सौधर्मादिदेवानां पारभविकोऽप्युपपातकालेऽवधिः संभवति, उपपातानन्तरं तु देवभवप्रत्ययजस्ततो न कश्चिद्दोषः ॥५१॥

सम्प्रति सामान्यतो वैमानिकवर्जदेवानामवधिक्षेत्रमाह—



संखेज्जजोयणा खलु, देवाणं अद्धसागरे ऊणे ।
तेण परमसंखेज्जा, जहण्णयं पंचवीसं तु ॥५२॥

॥७६॥

खलुरवधारणार्थोऽस्य चोभयथा सम्बन्धः, यथा अर्द्धसागरे न्यूने एव चायुषि सति यथोक्तं क्षेत्रं; ततः परं सम्पूर्णार्द्धसागरोपमादावायुषि त्वसंख्येयानि योजनान्यवधिक्षेत्रं, ऊर्ध्वमधस्तिर्यक् च संस्थानविशेषाद्वक्ष्यमाणाद्भाव्यम्,

जघन्यकमवधिक्षेत्रं पञ्चविंशतिरेव योजनानि, तुरेवार्थः, देवानामिति वर्तते, एतच्च दशवर्षसहस्रस्थितीनां भवनपतिव्यन्तराणां ज्ञेयं, ज्योतिष्काः, पुनरसंख्येयस्थितिकत्वाज्जघन्यतोऽपि संख्येययोजनप्रमितान् संख्येयान् द्वीपसमुद्रान् पश्यति उत्कर्षतोऽपि संख्येययोजनप्रमितानेव संख्येयान् द्वीपसमुद्रान्, केवलमधिकतरान् ॥५२॥

अथायमेव चावधिर्येषामुत्कृष्टादिभेदभिन्नो भवति तानुपदर्शयन्नाह—

उक्कोसो मणुएसुं, मणुस्सतिरिएसु य जहण्णो य ।
उक्कोस लोगमित्तो, पडिवाइ परं अपडिवाई ॥५३॥

गाथा—५३

इह द्रव्यतः क्षेत्रतः कालतो भावतश्चोत्कृष्टोऽवधिर्मनुष्येष्वेव, न देवादिषु, तथा नरतिर्यक्ष्वेव जघन्योऽवधिः, न देवादिषु, च एवार्थः, तथा प्रतिपातिष्ववधिषु मध्ये उत्कृष्टावधिः प्रतिपतितुं शीलमस्येति प्रतिपाती, लोकमात्र एव, मात्रा शब्दोऽलोकव्यवच्छेदार्थः, यद्यवधिः प्रतिपतति तत उत्कर्षतो लोकमात्र एव, लोकात् परमेकमप्याकाशप्रदेशं पश्यन् नियमादप्रतिपाती ॥५३॥

उक्तं क्षेत्रपरिमाणद्वारं, अधुना संस्थानद्वारव्याख्याचिसयाह—

थिवुयायार जहण्णो, वट्टो उक्को समायओ किंचि ।
अजहण्णमणुक्कोसो य खित्तओ णेगसंढाणो ॥५४॥

गाथा—५४

स्तिबुकः–उदकबिन्दुस्तस्येवाकारो यस्यासौ स्तिबुकाकारो जघन्यावधिः, तमेव स्पष्टयति–वृत्तः, सर्वतो वृत्तः, पनकक्षेत्रस्य वर्तुलत्वात्, तथा उत्कृष्टः परमावधिः आयतः–प्रदीर्घः किञ्चित्–मनाक्, वह्निजीवसूच्या अवधिमच्छरीरस्य सर्वतो भ्राम्यमाणया व्याप्यमानस्य क्षेत्रस्य एतदाकारभावात्, तथा न जघन्यो नाप्युत्कृष्टोऽजघन्योत्कृष्टो–मध्यम एव, क्षेत्रतोऽनेकसंस्थानः, च एवार्थः, एवं जघन्योत्कृष्टावधिसंस्थानमुक्तं, एवं विमध्यमावधिसंस्थानमाह ॥५४॥



**तप्पागारे १ पल्लग २ पडहग ३ झल्लरि ४ मुइंग ५ पुप्फ ६ जवे ७ ।**
**तिरियमणुएसु ओही, नाणाविहसंठिओ भणिओ ॥५५॥**

तप्रो नाम काष्ठसमुदायविशेषो यो नदीप्रवाहेण प्लाव्यमानो दूरादानीयते, स चाऽयतस्त्र्यस्रश्च भवति, तस्येवाकारो यस्यासौ तप्राकारोऽवधिर्नारकाणां, पल्लको लाटदेशप्रसिद्धो ? धान्याधारविशेषः, स चोर्ध्वायत उपरि च किञ्चित्संक्षिप्तः, आकार इति वर्तते, तस्येव आकारो यस्यासौ पल्लकाकारो भवनपतीनां, एवमाकारशब्दः सर्वत्र योज्यः, पटह–आतोद्यविशेषः, स च किञ्चिदायत उपर्यधश्च समप्रमाणः तदाकारोऽवधिः व्यन्तराणां, उभयतो विस्तीर्णा चर्मावनद्धमुखा मध्येसंक्षिप्ता ढक्काकारा छल्लरी–आतोद्यविशेषरूपा तदाकारोऽवधिर्ज्योतिष्कदेवानां, मृदङ्गो–वाद्यविशेषः, स चाधस्ताद्विस्तीर्ण उपरि च तनुकः सुप्रतीतस्तदाकारोऽवधिः सौधर्माद्यच्युतपर्यन्तदेवानां, पुष्फत्ति–पदैकदेशे पदसमुदायोपचारात् सशिखा पुष्पभृता चंगेरी, तदाकारोऽवधिर्ग्रैवेयकविमानवासिदेवानां, 'जव'इति यवनालक इति द्रष्टव्यं, यवनालको नाम कन्या चोलकः, स च मरुमण्डलादिप्रसिद्धश्चरणकरूपेण कन्यापरिधानेन सह सीवितो

भवति येन परिधानं न चलाचलं भवति, कन्यानामेवैष मस्तकप्रदेशेन प्रक्षिप्यते, तदाकारोऽवधिरनुत्तरसुराणां, एष च नारकादीनामनुत्तरसुरपर्यन्तानामेतदाकारः सर्वकालनियतः प्रत्येतव्यः, तिर्यग्मनुष्येष्ववधिर्नानाविधसंस्थानसंस्थितः, संस्थानशब्दलोपोऽत्र द्रष्टव्यः, स्वयंभूरमणजलधिवासिमत्स्यगणवत्, अपितु तत्रापि मत्स्यानां वलयाकारसंस्थानं निषिद्धं तिर्यग्मनुष्यावधिस्तुतदाकारोऽपि भवति, भणितस्तीर्थकृदादिभिः, अनेन च संस्थानप्रतिपादनेनेमावेदितं भवति भवनपतिव्यन्तराणामूर्ध्वं प्रभूतोऽवधिः, वैमानिकानामधः, ज्योतिष्कनारकाणां तिर्यक्, विचित्रस्तु नरतिरश्चां ॥ उक्तं संस्थानद्वारम् ॥५५॥

अथसप्रतिपक्षानुगामिकद्वारार्थमाह —

अणुगामिओ उ ओही, नेरइयाणं तहेव देवाणं ।<br>
अणुगामी अणणुगामी, मीसो य मणुस्सतेरिच्छे ॥५६॥



गच्छन्तं पुरुषमासमन्तादनुगच्छतीत्येवंशीलः अनुगामी अनुगाम्येवानुगामिकः, स्वार्थे कः, आनुगामिकावधिर्द्विधा अन्तगतो मध्यगतश्च, तत्रान्तगत इति कः शब्दार्थ ?, उच्यते, इह पूर्वाचार्यप्रदर्शितमर्थत्रयं, अन्ते—आत्मप्रदेशानां पर्यन्ते गतः—स्थितोऽन्तगतः, कोऽर्थ ? इहावधिरुत्पद्यमानः कोऽपि स्पर्द्धकरूपतयोत्पद्यते, स्पर्द्धकं च नाम अवधिज्ञानप्रभाया गवाक्षजालादिद्वारविनिर्गतप्रदीपप्रभाया इव प्रतिनियतो विच्छेदविशेषः, तानि चैकजीवस्याऽसंख्येयानि

वा भवन्ति, विचित्ररूपाणि, कानिचित्पर्यंतवर्तिष्वात्मप्रदेशेषूत्पद्यन्ते, तत्रापि कानिचित्पुरतः कानिचित्पृष्ठतः कानिचिदधोभागे कानिचित्मध्यवर्तिष्वात्मप्रदेशेषु, तत्र यः पर्यन्तवर्तिष्वात्मप्रदेशेष्ववधिरुत्पद्यते स आत्मनः पर्यन्ते स्थित इति-कृत्वा अन्तगत इत्यभिधीयते, तैरेवात्मप्रदेशैः प्रर्यन्तवर्तिभिः साक्षादेव बोधः, अथवा औदारिकशरीरस्यान्ते गतः-स्थितोऽन्तगतः, औदारिकशरीरमभिक्रम्य कयाचिदेकया दिशोपलम्भात्, इदमपि स्पर्द्धकरूपमवधिज्ञानं, अथवा सर्वेषामात्मप्रदेशानां क्षयोपशमभावेऽपि औदारिकशरीरान्ते कयाचिदेकया दिशा यद्वशादुपलभते सोऽप्यंतगतः, विचित्रो हि देशाद्यपक्षया कर्मणां क्षयोपशमः, ततः सर्वेषामात्मप्रदेशानामित्थंभूत एव स्वसामग्रीवशात् क्षयोपशमः संवृत्तो यदौदारिकशरीरमपेक्ष्य कयाचिद्विवक्षितया दिशा पश्यतीत्येष द्वितीयोऽर्थः तृतीयः पुनरयं-एकदिग्भाविना तेन यदुद्योतितं क्षेत्रं तस्यान्ते वर्तते सोऽवधिरन्तगतः, अवधिज्ञानवतस्तदन्ते वर्तमानत्वात्, अन्तगतश्चावधिस्त्रिधा पुरतोऽन्तगतः पृष्ठतोऽन्तगतः पार्श्वतोऽन्तगतश्च, तत्र यथा कश्चित् पुरुषो हस्तगृहीतया दीपिकया पुरतः प्रेर्यमाणया पुरत एव पश्यति नान्यत्र एवं येनावधिना तथाविधक्षयोपशमभावतः पुरत एव संख्येयान्यसंख्येयानि वा योजनानि पश्यति सोऽवधिः पुरतोऽन्तगतः, एवं यथा पृष्ठतो हस्तेन ध्रियमाणया दीपिकया पृष्ठत एव पश्यति एवं येनावधिना पृष्ठत एव संख्येयान्यसंख्येयानि वा योजनानि पश्यति स पृष्ठतोऽन्तगतः, येन पुनः पार्श्वत एकतो द्वाभ्यां वा संख्येयान्यसंख्येयानि वा योजनानि पश्यति स पार्श्वतोऽन्तगतः, मध्यगतः इत्यत्रापि त्रिधा व्याख्यानं, इह मध्यं प्रसिद्धं दण्डादेरिव, तत्रात्मप्रदेशानां मध्ये मध्यवर्त्तिष्वात्मप्रदेशेषु गतः-स्थितो मध्यगतः अयं च

स्पर्द्धकरूपः सर्वदिगुपलम्भकारणं मध्यवर्त्तिनामात्मप्रदेशानामवधिर्ज्ञेयः, अथवा सर्वेषामप्यात्मप्रदेशानां क्षयोपशमभावेऽप्यौदारिकशरीरमध्यभागेनोपलब्धेः तन्मध्ये गतो मध्यगतः, अथवा तेनावधिना यदुद्योतितं क्षेत्रं सर्वासु दिक्षु तस्य मध्ये-मध्यभागे गतः-स्थितो मध्यगतः, अवधिज्ञानिनस्तदुद्योतितक्षेत्रमध्यवर्तित्वात्, तुरेवार्थः, आनुगामिक एव यथोक्तरूपो नारकाणां, नान्यः, तथैवानुगामिक एव देवानां, तथा मनुष्येषु तिर्यक्षु चानुगामिक उक्तशब्दार्थः, तथाऽनानुगामिकः-अवस्थितः शृङ्खलादिनियंत्रितप्रदीप इव यो गच्छन्तं पुरुषं नानुगच्छति, यस्योत्पन्नस्यावधेर्देशो व्रजति स्वामिना सह अपरश्च देशान्तरचलितपुरुषस्योपहतैकलोचनवदन्यत्र न व्रजति स मिश्र उच्यते, अयं गाथार्थः, देवनारकाणा सर्वात्मप्रदेशजाभ्यन्तरावधिरूपमध्यगत आनुगामिकोऽवधिः, तिर्यग्मनुष्याणां तु सर्वभेदः, आनुगामिकोऽनानुगामिको मिश्रश्चेति भावार्थः, उक्तमानुगामिकद्वारम् ॥५६॥

अथावस्थितद्वारं गाथाद्वयेनाह, अवस्थितत्वञ्चावधेराधारभूतक्षेत्रतः उपयोगतो लब्धितश्च, तत्राद्यगाथयाद्यऽऽभेदावाह—

खित्तस्स अवट्ठाणं, तित्तीसं सागरा उ कालेणं ।
दव्वे भिण्णमुहुत्तो, पज्जवलंभे य सत्तट्ठ ॥५७॥



अवस्थितिरवस्थानं, अवधेराधाररूपतालक्षणेन पर्यायेण क्षेत्रस्यावस्थानं, कालेन कालमाश्रित्य त्रयस्त्रिंशत्सागरोपमाण्येव, तुरेवार्थः, अनुत्तरसुरा यत्र क्षेत्रे येष्वेव प्रतिनियतक्षेत्रप्रदेशेषु जन्मसमयेऽवगाढास्ते प्रायस्तत्रैवाऽऽभवक्षयमवतिष्ठन्ते, ततस्तानधिकृत्योत्कर्षतोऽवधेरवस्थानं त्रयस्त्रिंशत्सागराणि, अथोपयोगमधिकृत्यावधेरवस्थानं, द्रव्ये-द्रव्यविषये तत्रान्यत्र

च क्षेत्रे भिन्नश्वासो मुहूर्तश्च भिन्नमुहूर्तः, अन्तर्मुहूर्तकालं, ततः परं सामर्थ्याभावात्, तत्रैव द्रव्ये ये पर्यवाः पर्यायास्तल्लाभे, पर्यायात्पर्यायान्तरं असंचरतोऽवधेरुपयोगमधिकृत्यावस्थानं सप्ताष्टौ वा समयान् यावत्, न परतः, पर्यायाणां सूक्ष्मतया परतस्तद्विषयेऽवस्थाने सामर्थ्याभावात्, अन्ये तु व्याचक्षते पर्यवा द्विधाः गुणाः पर्यायाश्च, तत्र सहवर्तिनो गुणाः शुक्लत्वादयः, क्रमवर्तिनः पर्याया नवपुराणादयः, गुणाः स्थूलाः, पर्यायास्तु सूक्ष्माः, यथा यथा च सूक्ष्म वस्तु तथा तथा उपयोगस्य स्तोककालता, द्रव्यगुणपर्यायाश्च यथोत्तरं सूक्ष्माः, ततो गुणेष्वष्टौ समयान् यावदुपयोगस्यावस्थानं, पर्यायेषु तु सप्त समयानिति ॥५७॥

अथ लब्धिमधिकृत्यावस्थानकालमानमाह—

अद्धाइ अवट्ठाणं, छावट्ठी सागरा उ कालेणं ।
उक्कोसगं तु एयं, इक्को समओ जहण्णेणं ॥५८॥

गाथा—५८

अद्धानामावधिज्ञानावरणक्षयोपशमरूपालब्धिरभिप्रेता, ततो अद्धाया-लब्धेः कालेन—कालतोऽवधेरवस्थानं, तत्रान्यत्र वा क्षेत्रे तेष्वन्येषु वा द्रव्यादिषूपयुक्तस्यानुपयुक्तस्य वा षट्षष्टिसागाराणि, तु शब्दान्नरभवेन साधिकानि, उपसंहारमाह—कालतोऽवस्थानमिदमाधारादिषु उत्कृष्टमेवोक्तं ज्ञेयं, जघन्येन—जघन्यतः पुनरुपयोगलब्धि अङ्गीकृत्यावस्थानं द्रव्यादावप्येकः समयः, तत्र नरतिरश्चां समयादूर्ध्वमवधेः प्रतिपातादनुपयोगाद्वा एकसमयावस्थानता ज्ञेया, देवनारकाणां तु येषां भवस्य चरमसमये सम्यक्त्वलाभाद्विभङ्गज्ञानमेवावधिरूपतया परिणमति ततः परं च मृतानां तदवधिज्ञानं

प्रच्यवते तेषां ज्ञेयम् ॥५८॥

उक्तमवस्थितद्वारं, अथ चलद्वारमाह—

वुड्ढी वा हाणी वा, चउव्विहा होइ खित्त कालाणं ।
दव्वेसु होइ दुविहा, छव्विह पुण पज्जवे होइ ॥५९॥



चलश्चावधिर्द्रव्यादिविषयमङ्गीकृत्य वर्द्धमानको हीयमानको वा भवति, वृद्धिर्हानिश्च प्रत्येकं सामान्येनागमे षड्विधे प्रोक्ते, तद्यथा–अनन्तभागवृद्धिः १, असख्यभागवृद्धिः २, संख्येयभागवृद्धिः ३, संख्यातगुणवृद्धिः ४, असंख्यातगुणवृद्धिः ५, अनन्तगुणवृद्धिः ६, एवमनन्तभागहान्यादिभेदाद्धानिरपि षट्प्रकारा, एतयोश्च षड्विधवृद्धिहान्योर्मध्येऽवधिविषयभूतक्षेत्रकालयोराद्यन्तभेदद्वयवर्जिता चतुर्विधा वृद्धिर्हानिर्वा भवति, अनन्तभागवृद्धिरनन्तगुणवृद्धिर्वा अनन्तभागहानिरनन्तगुणहानिर्वा क्षेत्रकालयोर्न संभवति, अवधिविषयभूतयोः क्षेत्रकालयोरानन्त्याभावात्, इयमत्र भावना–यावत् क्षेत्रं प्रवर्द्धमानाख्येनाऽवधिना प्रथमं दृष्टं ततः प्रतिसमयं स सप्रवर्द्धमानोऽवधिः कश्चिदसंख्यातभागवृद्धं पश्यति, कोऽपि सख्यातभागवृद्धिं पश्यति, कोऽपि संख्यातगुणवृद्धं, कोऽप्यसख्यातगुणवृद्धं, तथा प्रथममवधिना हीयमानेन यत्क्षेत्रं दृष्ट ततः प्रतिसमयं कश्चिदसंख्यातभागहीनं पश्यति, कोऽपि संख्यातभागहीनं कोऽपि संख्यातगुणहीनं ३, कोऽप्यसंख्यातगुणाहीनं ४, एवं क्षेत्रस्य वृद्धिर्हानिर्वा भवति चतुर्धा, इत्थं कालेऽपि वृद्धिहान्योश्चातुर्विध्यं भाव्यं, द्रव्येषु पुन धिविषयभूतेषु द्विविधा वृद्धिर्हानिर्वा भवति, तथाहि–यावन्ति द्रव्याणि प्रथममवधिना दृष्टानि ततः परं

कोऽप्यनन्तभागाधिकानि पश्यति, अपरस्तु तेभ्योऽनन्तगुणवृद्धानि, नत्वसंख्येयभागादिना वृद्धानि, तथास्वाभाव्यात्, एवं हानिरपि, कोऽपि पूर्वोपलब्धेभ्योऽनन्तभागहीनानि द्रव्याणि पश्यति, कोऽप्यनन्तगुणहीनानि, तथास्वाभाव्यादेव, पर्यायेषु पुनः पूर्वोक्त षड्विधा वृद्धिर्हानिर्वा भवति, एतेषां च द्रव्यक्षेत्रकालभावानां परस्परसंयोगे चिन्त्यमाने एकस्य वृद्धावेवापरस्य वृद्धिः, नत्वेकस्य हानावन्यस्य वृद्धिः, एकस्य हानावेवापरस्य हानिः, नत्वेकस्य वृद्धावपरस्य हानिः, अन्यच्च एकस्य द्रव्यादेर्भागेन वृद्धौ हानौ वा जायमानायामपरस्यापि प्रायो भागेनैव वृद्धिहानी भवतः, नतु गुणकारेण, गुणकारेणाप्येकस्य वृद्धिहान्योः प्रवर्तमानयोरपरस्यापि प्रायो गुणकारेणैव प्रवर्तेत नैव भागेन,

ननु क्षेत्राधाराणि द्रव्याणि द्रव्याधाराश्च पर्यायाः, यादृश्येव चाधारस्य वृद्धिराधेयस्यापि तादृश्येव युक्ता, तथा च सति क्षेत्रस्यासंख्येयभागादिवृद्धौ तदाधेयद्रव्याणामपि तन्निबन्धनत्वादसंख्येयभागादिवृद्धिः स्यात्, द्रव्यस्यानन्तभागादिवृद्धौ सत्यां तत्पर्यायाणामप्यनन्तभागादिवृद्धिरेव प्राप्नोति न षट्स्थानकं, पर्यायाणां द्रव्यनिबन्धनत्वात्, उच्यते, सामान्यन्यायमङ्गीकृत्येत्थमेव, कोऽर्थः? यदा क्षेत्रानुवृत्त्या पुग्दलाः परिसंख्यायन्ते पुग्दलानुवृत्त्या च तत्पर्यायास्तदा क्षेत्रस्यासंख्येयादिभागवृद्धिहान्योः सत्योर्द्रव्यस्यापि तदनुवृत्त्या तथैव वृद्धिहानी प्राप्नुतः, द्रव्यस्यापि वाऽनन्तभागादिवृद्धिहान्योस्तत्पर्यायाणामपि तदनुवृत्त्या तथैव वृद्धिहानी स्यातां, न चात्रैवं, यस्मात्क्षेत्रानन्तगुणाः पुग्दलाः, पुग्दलेभ्योऽपि तत्पर्याया अनन्तगुणाः, अवधिश्च क्षयोपशमाधीनः, क्षयोपशमश्च तत्तद्द्रव्यादिसामग्रीवशाद्विचित्रपरिणामः, केवलज्योतिषा च भगवतैवंस्वरूप एवोपालब्धः, ततो यथोक्तस्वरूपे एव वृद्धिहानी प्रतिपत्तव्ये, नान्यथेति न कश्चिद्दोषः ॥५९॥

उक्तं चलद्वारं, अथ तीव्रमन्दद्वारमाह—

फड्डा य असंखिज्जा, संखेज्जा यावि एग जीवस्स ।
एकप्फड्डुवओगे, नियमा सव्वत्थ उवउत्तो ॥६०॥



स्पर्द्धकानि प्रागुक्तस्वरूपाणि तानि चैकजीवस्य संख्येयान्यसंख्येयान्यपि भवन्ति, तत्रैकस्पर्द्धकोपयोगे सति नियमात् सर्वत्र-सर्वेषु स्पर्द्धकेषूपयुक्तो भवति, एकोपयोगत्वाज्जीवस्य, एकलोचनोपयोगे द्वितीयलोचनोपयुक्तवत्, प्रकाशमयत्वाद्वा प्रदीपोपयोगवत्, कोऽर्थः? यः प्रकाशमयस्तस्यैकस्मिन्नप्यर्थे प्रकाशकत्वेन व्याप्रियमाणस्य सर्वात्मना व्यापारो, न देशेन, यथा प्रदीपस्य, जीवोऽपि ज्ञानप्रकाशनप्रकाशवान् ततोऽस्यापि सर्वस्पर्द्धकैरेकोपयोगतया सर्वात्मना व्यापार इति, प्रदीपस्य चोपयोगो व्यापार एव ॥६०॥

फड्डा य अणुगामी, अणाणुगामी य मीसगा चेव ।
पडिवाइ अवडिवाई, मीसो य मणुस्सतेरिच्छे ॥६१॥



एतानि च स्पर्द्धकानि त्रिविधानि भवन्ति, तद्यथा-अनुगमनशीलान्यानुगामिकानि-यत्र प्रदेशे तिष्ठतो जीवस्यावधिमत उत्पन्नानि ततोऽन्यत्रापि व्रजतस्तस्यानुयायीनीति भावः, एतद्विपरीतान्यनानुगामिकानि, उभयस्वरूपाणि मिश्राणि, कानिचिद्देशान्तरयायीनि कानिचिन्नेति भावः, एतानि च पुनः प्रत्येकं त्रिधा स्युः,

तद्यथा—प्रतिपतनशीलानि प्रतिपातीनि, कियन्तमपि कालं स्थित्वा ततो ध्वंसगमनस्वभावानीति भावः, तद्विपरीतान्यप्रतिपातीनि, आमरणान्तभावीनीत्यर्थः उभयस्वभावानि मिश्राणि, एतानि च स्पर्द्धकानि मनुष्यतिर्यक्षु योऽवधिस्तस्मिन्नेव भवन्ति, न देवनारकावधौ, ननु तीव्रमन्दद्वारे प्रस्तुते स्पर्द्धकावधिस्वरूपकथनं कथं युक्तम् ?, उच्यते, इह प्राय आनुगामिकाप्रतिपातीनि स्पर्द्धकानि तीव्रशुद्धियुक्तत्वात्तीव्राणि, अनानुगामिप्रतिपातीनि त्वविशुद्धत्वान्मन्दानि, मिश्राणि च मध्यमानि, ततस्तीव्रमन्द द्वारमेवेत्यदोषः, ननु आनुगामिकाप्रतिपातिस्पर्द्धकयोः परस्परं कः प्रतिविशेषः ? को वाऽनानुगामिकप्रतिपातिस्पर्द्धकयोः ?, उच्यते, अप्रतिपातिस्पर्द्धकमानुगामिकमेव भवति, आनुगामिकं तु प्रतिपात्यप्रतिपाति चेति विशेषः, तथा प्रतिपाति पतत्येव, पतितमपि च देशान्तरे गतस्य कदाचिज्ञायते, न चेत्थमनानुगामिकं, इत्यनानुगामिकप्रतिपातिनोर्विशेषः ॥६१॥ उक्तं तीव्रमन्दद्वारम् ।

अथ गाथाद्वयेन प्रतिपातोत्पादद्वारमाह—



> बाहिरलंभे भज्जो दव्वे खित्ते य कालभावे य ।
> उप्पा पडिवाओऽविय, तं उभयं एगसमएणं ॥६२॥

इह द्रष्टुरवधिमतो योऽवधिः तस्यैव एकस्यां दिशि भवति स बाह्यावधिः, अथवा अनेकास्वपि दिक्षु यः स्पर्द्धकावधिरन्योन्यं विच्छिन्नो भवति सोऽपि बाह्यावधिः, स्थापना अथवा सर्वतः परिमंडलाकारोऽपि योऽवधिरवधिमतोऽङ्गुलमानादिना क्षेत्रव्यवधानेन सर्वतोऽसंबद्धः सोऽपि बाह्यावधिः, तस्यैवंविधस्य बाह्यस्य—बाह्यावधेर्लाभे

प्राप्तौ सत्यां भाज्या–विकल्पनीयाः, कः? उत्पादः–उत्पत्तिः प्रतिपातो–ध्वंसः तदुभयं च एकसमयेन, किं विषय इत्याह–द्रव्ये क्षेत्रे काले भावे च, अपिचशब्दा यथायोगं पूरणसमुच्चयार्थाः, एकस्मिन् द्रव्यादौ विषये बाह्यावधेः कदाचिदुत्पादः कदाचिद्व्ययः कदाचिदुभयं, ननूत्पादप्रतिपातयोः परस्परविरुद्धत्वात्कथमुभयमेकसमयेनेति? नैष दोषः, विभागेन भावात्, तथा चात्र दावानलदृष्टान्तः, दावानलः खलु एककाल एव एकतो दीप्यतेऽन्यतश्च ध्वंसते, तथाऽवधिरप्येकदेशे जायतेऽन्यत्र प्रच्यवते ॥६२॥

अब्भितरलद्धीए उ तदुभयं नत्थि एगसमएणं ।
उप्पा पडिवाओऽविय, एगयरो एगसमएणं ॥६३॥



इह दृष्टव्यं सर्वत्रः संबद्ध प्रदीपस्य प्रभानिकरवत् सोऽभ्यन्तरावधिस्तस्य–अभ्यन्तस्याभ्यन्तरावधेः, लब्धिः प्राप्तिस्तस्यां सत्यां, तुर्विशेषणार्थः, किं विशिनष्टि? तच्चतदुभयं चोत्पादप्रतिरूपमुभयं, नास्ति एकसमयेन द्रव्यादौ विषये इत्यनुवर्त्तते किं तर्हि?, उत्पादः प्रतिपातो वा एकतर एव एकसमयेन, अपिरेवार्थो स च भिन्नक्रमस्तथैव च योजितः अयं भावार्थः प्रदीपस्यैवोत्पाद एव वा प्रतिपात एव वा एकसमयेनाभ्यन्तरावधेरुपजायते, नतूभयमप्रदेशावधित्वात्, न ह्येकस्यैकपर्यायेणोत्पादव्ययौ युगपद्भवितुमर्हतः, परस्परविरोधात् ॥६३॥

इदानीं प्रसङ्गत एवोत्पादप्रतिपाताधिकारे द्रव्यपर्याययोः परस्परमुपनिबन्धं प्रतिपादयन्नाह—

दव्वाओ असंखिज्जे, संखेज्जे आवि पज्जवे लहइ ।
दो पज्जवे दुगुणिए, लहइ य एगाउ दव्वाउ ॥६४॥



परमाण्वादि द्रव्यमेकं पश्यन्नवधिज्ञानी द्रव्यात्सकाशात् तत्पर्यायानुत्कर्षतोऽसंख्येयान् मध्यमतः संख्येयाश्चापि लभते पश्यतीत्यर्थः, जघन्यतस्तु द्वौ पर्यायौ द्विगुणितौ लभते चैकस्माद्रव्यात्, इदमुक्तं भवति—सामान्यतो वर्णगन्धरसस्पर्शलक्षणांश्चतुरः पर्यायानेकस्मिन् द्रव्ये पश्यति, नत्वेकगुणकालादीन् बहूनिति, अनन्तांश्च पर्यायानुत्कर्षतोऽपि न प्रेक्षते एकद्रव्यगतान्, अनन्तेषु द्रव्येषु समुदितेष्वनन्तांस्तान् पश्यत्येव ॥६४॥ गतं सप्रसङ्गं उत्पादप्रतिपातद्वारम् ।

इदानीं ज्ञानदर्शनविभङ्गलक्षणं द्वारत्रयं युगपदभिधित्सुराह—

सागारमणागरा, ओहिविभंगा जहण्णगा तुल्ला ।
उवरिमगेवेज्जेसु उ, परेण ओही असंखिज्जो ॥६५॥



इह योऽवधिर्विशेषग्राहकः स साकारः, स च सम्यग्दृष्टेः ज्ञानमित्यभिधीयते, स एव मिथ्यादृष्टेर्विभङ्गः, यः पुनः सामान्यग्राहकोऽवधिः विभङ्गो वा सोऽनाकारः, स च दर्शनं, तत्र साकारानाकाराववधिविभङ्गौ जघन्यकादारभ्य तुल्यौ भवतः, लोकपुरुषग्रीवाभवानि ग्रैवेयकानि, उपरिमाणि च तानि ग्रैवेयकाणि च उपरिमग्रैवेयकाणि

तेषु यावत्, तुरेतद्विशिनष्टि–नारकभवनपतिदेवेभ्य आरभ्य तिर्यङ्मनुष्यवर्जमुपरिग्रैवेयकेषु यावत् साकारानाकाराववधिविभङ्गौ तुल्यौ, इयं भावना नारकभवनपत्यादयश्चोपरितनग्रैवेयकविमानवासिपर्यन्तादेवा ये ये जघन्यतुल्यस्थितयो मध्यमतुल्यस्थितय उत्कृष्टतुल्यस्थितयो वा तेषां तेषामवधिविभङ्गज्ञानदर्शने क्षेत्रकालरूपौ विषयावधीकृत्य परस्परतस्तुल्ये, नतु द्रव्यभावविषयौ, तावङ्गीकृत्य तुल्यस्थितिकानामपि सम्यग्दर्शनं विशुद्धतपःकर्मादिकं च प्राग्भवगतं कारणं प्रतीत्यातिदूरं तुल्यताऽभावात्, ग्रैवेयकविमानेभ्यस्तु परतोऽनुत्तरविमानेष्ववधिः ज्ञानदर्शनरूपो भवति, नतु विभङ्गज्ञानं, मिथ्यादृष्टिनां तत्रोपपाताभावात्, स च क्षेत्रतः कालतश्चासंख्येयो भवति, द्रव्यभावैस्त्वनन्तविषयः, इह तिर्यङ्मनुष्याणां तुल्यस्थितीनामपि क्षयोपशमतीव्रमन्दतादिकारणवैचित्र्यात् क्षेत्रकालविषययोरप्यवधिविभङ्गज्ञानदर्शनयोर्विचित्रता, न पुनस्तुल्यतैवेतीह तद्वर्जनं ९–१०–११ ॥६५॥ गतं ज्ञानादिद्वारम् ।

अथ देशद्वारमभिधित्सुरिदमाह—

णेरइयदेवतित्थंकरा य ओहिस्सऽवहिरा हुंति ।
पासंति सव्वओ खलु, सेसा देसेण पासंति ॥६६॥

गाथा–६६

नैरयिकाश्च देवाश्च तीर्थकराश्च नैरयिकदेवतीर्थकराः, चोऽवधारणे भिन्नक्रमश्च, अवधेः अवधिज्ञानस्याबाह्या एव अवध्युपलब्धक्षेत्रस्यान्तर्वर्त्तिनः, न कदाचनापि बाह्या भवन्तीत्यर्थः, सर्वतोऽवभासकत्वात्तदवधेः, प्रदीपवत्,

तथा पश्यन्ति सर्वतः, खलुरेवार्थः, सर्वास्वेव दिक्षु विदिक्ष्विति, नन्ववधेरबाह्या भवन्तीत्यस्मादेव सर्वत इत्यस्य लब्धत्वात् सर्वतो ग्रहणमतिरिच्यते, नैष दोषः, अभ्यन्तरत्वाभिधानेऽपि सर्वतो दर्शनाप्रतीतेः, न खल्ववधेरभ्यन्तरत्वेऽपि मति सर्वे सर्वतः पश्यन्ति, कस्यचिद्दिगन्तरालादर्शनात्, विचित्रत्वादवधेः, ततः सर्वतो दर्शनख्यापनार्थं सर्वत इत्युक्तं, शेषास्तिर्यग्नरा एव देशेन एकदेशेन पश्यन्ति, नतु शेषा देशत एव, तिर्यग्नराणां देशतः सर्वतश्च यथायोगमवधिज्ञानदर्शनात्, इति सावधारणं ज्ञेयं, अथवाऽन्यथा व्याख्याते नैरयिकादेवतीर्थकरा अवधेरबाह्या भवन्ति, कोऽर्थ ? नियतावधयो भवन्ति, नियमेनैषामवधिर्भवतीति भावः, एवं चाभिहिते संशयः—किं देशेन पश्यन्ति उत सर्वतः इति, तदपनोदार्थमाह पश्यन्ति सर्वतः खलु, नतु देशतः अपर आह—ननु पश्यन्ति सर्वतः खल्वित्येतावदेवास्तां अवधेरबाह्या भवन्तीत्येतन्न युक्तं, यतो नियतावधित्वप्रतिपादनार्थमिदमुच्यते, नियतावधित्वं च देवनारकाणां "दोण्हं भवपचइयं, तंजहा—देवाणं नेरइयाणं चेति वचनात् सिद्धं, तीर्थकृतां तु पारभविकावधिसमन्वागमस्यातिप्रसिद्धत्वात्, उच्यते, इह यद्यपि "दुण्हं भव" इत्यादि वचनान्नारकादीनां नियतावधित्वं लब्धं तथापि सर्वकालं तेषां नियतावधिरिति न लभ्यते तत्ख्यापनार्थमेवधेरबाह्या भवन्तीत्युक्तं, यद्येवं तर्हि तीर्थकृतामवधेः सर्वकालावस्थायित्वं विरुध्यते, न छद्मस्थकालस्यैव तेषां विवक्षणात्, अथवा केवलोत्पत्तावपि, वस्तुतस्तत्परिच्छेदस्याप्यनिष्टत्वात्, केवलेन सुतरां संपूर्णानन्तधर्मकवस्तुपरिच्छित्तेः, शेषं प्राग्वत् ॥६६॥ गतं देशद्वारं ।

अथ क्षेत्रद्वारं विवरीपुराह—

संखिज्जमसंखिज्जो, पुरिसमबाहाइ खित्तओ ओही ।
संबद्धमसंबद्धो, लोगमलोगे य संबद्धो ॥६७॥

कश्चित् क्षेत्रतोऽवधिरवधिमति जीवे प्रदीपे प्रभापटलमिव सम्बद्धो—लग्नो भवति, जीवावष्टब्धक्षेत्रादारभ्य निरन्तरं द्रष्टव्यं वस्तु प्रकाशयतीति भावः, कश्चित्पुनरतिविप्रकृष्ट तमोव्याकुलमन्तरालवर्त्तिनं प्रदेशमुल्लंघ्य दूरस्थितभित्त्यादिप्रतिस्खलितप्रभेवासम्बद्धो जीवे भवति, कया हेतुभृतया असम्बद्ध इत्याह—'पुरिसमबाहाइ'ति मकारोऽलाक्षणिकः, पूर्यते सुखदुःखाभ्यामिति पुरुषः तस्मादबाधा अपान्तरालं पुरुषाबाधा तया हेतुभूतया सम्बद्धोऽसम्बद्धश्चावधिः क्षेत्रतः कियान् भवतीत्याह—सख्येयोऽसंख्येयश्च योजनापेक्षया भवति, अत्रापि मः पूर्ववत्, असंबद्धोऽप्यवधिः क्षेत्रतः सख्येयान्यसंख्येयानि वा योजनानि स्यात्, एव सम्बद्धोऽपि, पुरुषस्यावधेश्चापान्तरालमपि संख्येयान्यसंख्येयानि वा योजनानि भवति, सा च पुरुषाबाधाऽसम्बद्धे एवावधौ भवति, नतु सम्बद्धे, तत्र सम्बद्धत्वेनैव तदसंभवाद् इह चासम्ब ऽवधौ अपान्तराले चतुर्भङ्गिका-सख्येयमन्तरं सख्येयोऽवधिः १, सख्येयमन्तरमसंखेयाऽवधिः २, असंख्येयमन्तर संख्येयोऽवधिः ३, असंख्येयमन्तरं असख्येयोऽवधिः ४, सम्बद्धे त्ववधौ विकल्पाभावः, तदुत्थानहेतोरन्तरलक्षणस्य द्वितीयपदस्य तत्राभावात्, तथाऽयमवधिर्लोकेऽलोके च सम्बद्धोऽपि भवति, इह लोकशब्देन लोकान्तो गृह्यते, तथा पूर्वसूरिकृतव्याख्यानात्,

अत्रापि चतुर्भङ्गिका—पुरुपे सम्बद्धो लोकान्ते च, अयं च लोकप्रमाणावधिरेव १, पुरुपे सम्बद्धो न लोकान्ते, देशतोऽभ्यन्तरावधिः २, पुरुपे सम्बद्धः किन्तु लोकान्ते, एकदिग्वर्त्ती बाह्यावधिः ३, शून्योऽयं भङ्ग इति हारिभद्रीया टीका (अंगुलसंख्येयभागवृद्धिक्रममपेक्ष्य) तदसम्यक्, चूर्णौ भाष्ये चाप्रतिपेधादसम्भवहेत्वभावाच्च (प्रदेशवृद्धिक्रमं संभाव्य) तथा न लोकान्ते सम्बद्धो नापि पुरुपे सम्बद्धो बाह्यावधिरेव स्तोकदेशवर्त्ती ४, यस्त्वलोके सम्बद्धः स पुरुपे नियमात् सम्बद्ध एव, अभ्यन्तरावधेरेवालोकदर्शनसमर्थत्वात् ॥६७॥ गतं क्षेत्रद्वारं १३ ।

गइ नेरइयाईया, हिट्ठा जह वण्णिया तहेव इह ।
इड्ढी एसा वण्णिज्जइत्ति तो सेसियाओऽवि ॥६८॥



गतिर्नैरयिकादिका, गतिग्रहणं शेपस्य इन्द्रियादिद्वारकलापस्योपलक्षणं, ततोऽयमर्थः—ये गत्यादयः सत्पदप्ररुपणाहेतवो ये च द्रव्यप्रमाणादयोऽष्टौ द्वारविशेषास्ते यथा अधस्तान्मतिश्रुतयोर्वर्णितास्तथैवेहापि द्रष्टव्याः, अयं तु विशेपः—ये पूर्वं मतिज्ञानस्य प्रतिपत्तारः प्रागुक्तास्तेऽवधिज्ञानस्यापि प्रतिपत्तारः, नवरं पूर्वं मतेः अवेदका अकपायिणो मनःपर्यायज्ञानिनश्च पूर्वप्रतिपन्ना उक्ताः इह तु प्रतिपद्यमाना अपि द्रष्टव्याः, यतः श्रेणिद्वये वर्तमानानामवेदकानामकपायाणां च केपाञ्चिदवधिरुत्पद्यते, येषां चानुत्पन्नावधिज्ञानानां मतिश्रुतचारित्रवतां मनःपर्यायज्ञानं प्रथममेवोत्पद्यते, तत्र मनःपर्यायज्ञानिनः केचित् पश्चादवधिज्ञानस्य प्रतिपत्तारः स्युः, अन्यच्चअनाहारका अपर्याप्तकाश्च मतेः पूर्वप्रतिपन्ना एवोक्ताः नतु प्रतिपद्यमानकाः, इह तु

येऽप्रतिपतितसम्यक्त्वास्तिर्यङ्मनुष्येभ्यो देवनारका जायन्ते ते अपान्तरालगत्यादाववधेः प्रतिपद्यमानका अपि प्रतिपत्तव्याः, शक्तिमङ्गीकृत्येति भावार्थः, पूर्वप्रतिपन्नाः पुनर्ये एव मतः प्रागुक्तास्ते एव द्रष्टव्याः, नवरं द्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियतिरश्चो मुक्त्वा, ते हि सास्वादनसम्यग्दृष्टयो मतेः पूर्वप्रतिपत्तार उक्ताः, अवधेस्तु न प्रतिपद्यमानका नापि पूर्वप्रतिपन्ना इति, शेषं तथैव, एतदेव विनेयजनानुग्रहाय सविस्तरं भाव्यते तत्रैव सत्पदप्ररूपणाविचारः– कोऽपि शिष्यो गुरुं पृच्छति भगवन्! अवधिज्ञानं किमस्ति नास्ति? इति गुरुराह– नियमादस्ति, यद्यस्ति कथमवगन्तव्यं?, गुरुराह– 'गइइंदिए' इत्यादिगाथाद्वयोक्तगत्यादिमार्गणास्थानैर्विंशत्या, तत्र गतिद्वारे चतुर्विधायामपि गतौ अवधेः पूर्वप्रतिपन्ना नियमतः सन्ति अन्ये तु भाज्याः १, इन्द्रियद्वारे एकद्वित्रिचतुरिन्द्रियेषूभयाभावः, पञ्चेन्द्रियेषु गतिवत् २, पृथ्व्यप्तेजोवायुवनस्पतिषूभयाभावः, त्रसकायेषु गतिवत् ३, त्रिषु योगेषु गतिवत्, मनोरहितवाग्योगेषु केवलकाययोगेषु चोभयाभावः ४, त्रिष्वपि वेदेषु गतिवत्, अवेदेषु तूभयामपि भाज्यं ५, एवं कषायद्वारेऽपि ६, उपरितनीषु तिसृषु लेश्यासु गतिवत्, तिसृष्वाद्यासु आद्याः सन्ति नत्वितरे ७, सम्यक्त्वद्वारे निश्चयव्यवहाराभ्यां विचारः, तत्र व्यवहारनयमतेन मिथ्यादृष्टिः सम्यग्दृष्टिश्चावधेः प्रतिपत्ता, पूर्वप्रतिपन्नस्तु सम्यग्दृष्टिरेव, निश्चयमतेन तु प्रतिपद्यमानकः पूर्वप्रतिपन्नश्चावधेः सम्यग्दृष्टिरेव ८, ज्ञानदर्शनद्वारयोर्गतिवत् ९-१०, संयतासंयता गतिवत् ११, साकारोपयोगे गतिवत्, अनाकारोपयोगे आद्याः नान्ये १२, आहारका गतिवत् अनाहारकाश्चापान्तरालगतौ आद्या अपरे

च संभवन्ति, अप्रतिपतितसम्यक्त्वानां तिर्यङ्मनुष्येभ्यो देवनारकत्वेनोत्पद्यमानानामवधेः प्रतिपत्तेरपि संभवात् १३, भाषकपरीत्तद्वारयोः प्राग्वत् १४–१५, षड्भिः पर्याप्तिभिर्ये पर्याप्तास्ते आद्याः सन्ति, अन्ये भाज्याः, अपर्याप्ता षट्पर्याप्त्यपेक्षया करणापर्याप्तास्ते द्वे संभवन्ति १६, सूक्ष्मादीनि द्वाराणि चत्वारि द्रव्यप्रमाणादीनि अष्टौ च प्राग्वत् ॥ उक्तमवधिज्ञानं, तच्चतुर्धा–द्रव्यादिभेदात्, तत्र द्रव्यतोऽवधिज्ञानी जघन्यतोऽनन्तानि रूपिद्रव्याणि, उत्कर्षतः सर्वाण्यपि रूपिद्रव्याणि जानाति पश्यति च १, क्षेत्रतो जघन्यतोऽङ्गुलस्यासंख्येयभागं उत्कर्षतोऽलोके लोकप्रमाणमात्राणि संख्यातीतानि खण्डानि, कालतो जघन्यतोऽसंख्येयभागमावलिकायाः उत्कर्षतोऽसंख्यो उत्सर्पिण्यवसर्पिणीः, भावतः जघन्यातोऽनन्तान् भावान् उत्कर्षतोऽप्यनन्तान् भावान् सर्वभावानां जानाति पश्यति च ॥६८॥

एष चावधिः ऋद्धिविशेषो वर्ण्यते, तत ऋद्धिप्रतिपादनावसरात् शेषर्द्धयोऽपि वर्ण्यन्ते ता एवाह—

आमोसहि विप्पोसहि खेलोसहि जल्लमोसही चेव ।
संभिन्नसो उज्जुमइ, सव्वोसहि चेव बोद्धव्वो ॥६९॥

आमर्षणमामर्षः संस्पर्शनं स एवौषधिर्यस्यासौ आमर्षौषधि–करादिसंस्पर्शनमात्रादेव व्याध्यपनयनसमर्थ,ः लब्धिलब्धिमतोरभेदोपचारात् साधुरेवामर्षौषधिर्लब्धिरित्यर्थः, एवं शेषपदेष्वपि भावना कार्या, तथा मूत्रस्य पुरीषस्य वाऽवयवो विडित्युच्यते, अन्येत्वाहुः–विडिति–विष्ठा 'प' इति प्रश्रवणं ते–औषधिर्यस्यासौ विप्रुडौषधिः,

तथा खेलः–श्लेष्मा जल्लो–मलः, सुगन्धाश्चैते भवन्ति विडादयस्तल्लब्धिमतः, इयमत्र भावना–इहामर्षौषधिः कस्यापि शरीरैकदेशे उत्पद्यते, कस्यापि सर्वस्मिन् शरीरे, तेनात्मानं परं वा यदा व्याध्यपनयनबुद्ध्या परामृशति तदा तदपगमो भवति, विडादिभिरपि तल्लब्धिमन्तो यदाऽऽत्मानं परं वा रोगापगमबुद्ध्या परामृशन्ति तदा तद्रोगापगमः, यः सर्वैरपि शरीरदेशैः शृणोति स संभिन्नश्रोताः, यद्वा श्रोतांसि–इन्द्रियाणि संभिन्नानि एकैकशः सर्वविषयैर्यस्य स सं सभिन्नश्रोताः, एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान् विषयान् योऽवगच्छति स इत्यर्थः, अथवा श्रोतांसि–इन्द्रियाणि सम्भिन्नानि एकैकशः सर्वविषयैर्यस्य सभिन्नानि परस्परत एकरूपतामापन्नानि यस्य स तथा, अथवा द्वादशयोजनविस्तृतस्य चक्रवर्तिकटकस्य युगपद् ब्रुवाणस्य तत्तूर्यसंघातस्य वा युगपदास्फाल्यमानस्य सम्भिन्नान् शब्दान् शृणोति स तथा, एवं च सभिन्नश्रोतृत्वमपि लब्धिरेव, ऋज्वी–प्रायो घटादिमात्रग्राहिणी मतिः ऋजुमतिः, विपुलमतिमनःपर्यायज्ञानापेक्षया किञ्चिदविशुद्धतरं मनःपर्यायज्ञानमेव तथा सर्व एव विड्मूत्रकेशनखादयोऽवयवाः सुरभयो व्याध्यपनयनसमर्थत्वादौषधयो यस्यासौ सर्वौषधिः, यद्वा सर्वा आमर्षौषध्यादिका औषधयो यस्यैकस्यापि साधोः सः, एवमेते ऋद्धिविशेषा बोद्धव्याः ॥६९॥

चारणआसीविस केवली य मणनाणिणो य पुव्वधरा ।
अरहंत चक्कवट्टी. बलदेवा वासुदेवा य ॥७०॥

अतिशयगमनागमनलब्धिसंपन्नाश्चारणाः, ते च द्विधा–जंघाचारणा विद्याचारणाश्च, ये चारित्रतपोविशेषस्य प्रभावतः समुद्भूतातिशयगमनागमनलब्धिसंपन्नास्ते जंघाचारणाः, ते च प्रथमोत्पातेन त्रयोदशं रुचकं द्वीपं यान्ति, वलन्तः प्रथमोत्पातेन नंदीश्वरे द्वितीयेन यतो गतास्तत्राऽऽयान्ति, ऊर्ध्वमेकेनैव मेरुशिखरपाण्डुकवनं, वलन्त एकेन नन्दनवनं द्वितीयेन स्वस्थानं एतेषां हि चारित्रप्रभावतो लब्धिः स्यात् ततो लब्ध्युपजीवनेनौत्सुक्यभावतः प्रमादसंभवाचारित्रातिशयनिबन्धना लब्धिरपि हीयते, ततो वलन्तो द्वाभ्यामुत्पाताभ्यां स्वस्थानं यान्तीति, ये पुनर्विद्यावशतः समुत्पन्नगमनागमनलब्धयस्ते विद्याचारणाः, ते चैकेनोत्पादेन मानुषोत्तरं द्वितीयेन नंदीश्वरं यान्ति, एकेनैव स्वस्थानं, ऊर्ध्वमेकेन नन्दनं द्वितीयेन पाण्डकवनं, वलन्त एकेनैव स्वस्थानं, ते रविकरानपि स्वीकृत्य गच्छन्ति, जंघाचारणास्त्वेवमेव, विद्याचारणा हि विद्यावशात् स्यात्, विद्या च परिशीलयमाना स्फुटा स्फुटतरा जायते, ततः प्रतिनिवर्तमानस्य शक्त्यतिशयसम्भवादेकेनैवोत्पातेन स्वस्थानमायाति । तथा आस्यो–दंष्ट्रास्तासु विषं येषां ते आशीविषाः, ते द्विधा–जातितः कर्म्मतश्च, जातितो वृश्चिकमण्डूकोरगमनुष्यजातयः, वृश्चिकविषं हि उत्कर्षतो (प्र. अर्द्ध)भरतक्षेत्रप्रमाणं शरीरं व्याप्नोति, मण्डूकविषमपि भरतक्षेत्रमानं, भुजङ्गमविषं जम्बूद्वीपप्रमाणं, मनुष्यविषं समयक्षेत्रमान, कर्मतश्च पञ्चेन्द्रियतिर्यग्योनयो मनुष्याः देवाश्चासहस्रारात्, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिकभुजङ्गादिसाध्यां क्रियां कुर्वन्ति, शापप्रदानादिना परं व्यापादयन्तीतिभावः, देवास्त्वपर्याप्तावस्थायां तच्छक्तिमन्तो ज्ञेयाः, ते हि पूर्वं नरभवे समुपार्जिताशीविषलब्धयः सहस्रारान्तदेवेष्वभिनवोत्पन्ना

अपर्याप्तावस्थायां प्राग्भवविकाशीविपलब्धिसंस्कारादाशीविपलब्धिमन्तो व्यवह्रियन्ते, ततः परं तु पर्याप्तावस्थायां सस्कारस्यापि निवृत्तिरिति न तद्व्यपदेशभाजः, तेऽपि शापादिना परं व्यापादयन्ति तथापि न लब्धिव्यपदेशः, भवप्रत्ययतथारूपसामर्थ्यस्य सर्वसाधारणत्वात्, गुणप्रत्ययो हि सामर्थ्यविशेषो लब्धिरितिप्रसिद्धेः, केवलिनश्च प्रसिद्धाः, मनोज्ञानिन इति मनःपर्यायज्ञानं विपुलमतिरूपं गृह्यते, ऋजुमतिरुपस्य प्रागेव गृहीतत्वात्, तत्र विपुलं बहुविशेषोपेतं वस्तु मन्यते, गृह्णातीत्यर्थः, पूर्वाणि धारयन्ति पूर्वधरा–दशचतुर्दशपूर्वविदः, एते हि सर्वे चारणादयो लब्धिविशेषाः ॥ ७० ॥ इह चार्हत्त्वं चक्रवर्तित्वं च ऋद्धयः प्रतिपादिताः, तत्र तदतिशयप्रतिपादनार्थमाह–

सोलसरायसहस्सा सव्वबलेणं तु संकलनिबद्धं ॥
अंछंति वासुदेवं अगडतडंमी ठियं संतं ॥७१॥ गाथा–७१

षोडश राजसहस्राणि सर्वबलेन, हस्त्यश्वरथपदातिरूपेणान्वितानि श्रृङखलानिबद्ध अच्छन्ति, देशीवचनमेतत् आकर्षतीत्यर्थः, अगडतटे–कूपतटे स्थितं सन्तम् ॥ ७२ ॥

घित्तूण संकलं सो वामगहत्थेण अंछमाणाणं ॥
भुंजिज्ज व लिंपिज्ज व महुमहणं ते न चायंत्ति ॥७२॥ गाथा–७२

गृहीत्वा श्रृंखलामसौ वामहस्तेन अंछमाणाणंति–आकर्षता भुंजीत घाटकादि विलिंपेतु तनुं, ते मधुमथनं न शक्नुवन्ति, आक्रष्टुमिति वाक्यशेषः ॥७३॥

दोसोला बत्तीसा, सव्वबलेणं तु संकलनिबद्धं ॥
अंछति चक्कवर्टि, अगडतडंमी ठियं संतं ॥७३॥

गाथा–७३

द्वौ षोडशकावित्यभिधानं वासुदेवाच्चक्रवर्तिनो द्विगुणऋद्धिख्यापनार्थं, राजसहस्राणीति गम्यते, शेषं सुगमं प्राग्वत् । ॥७४॥

घित्तूण संकलं सो, वामगहत्थेण अंछमाणाणं ॥
भुंजिज्ज व लिंपिज्ज व, चक्कहरं ते न चायंति ॥७४॥

गाथा–७४

जं केसवस्स उ बलं, तं दुगुणं होइ चक्कवट्टिस्स ॥
तत्तो बला बलवगा, अपरिमियबला जिणवरिंदा ॥७५॥

गाथा–७५

यत् केशवस्य तु बलं तद्द्विगुणं भवति चक्रवर्तिनः, ततः–शेषलोकबलाद् बला–बलदेवा बलवन्तः, केशवापेक्षया त्वर्द्धबलाः, निरवशेषवीर्यान्तरायक्षयादपरिमितं बलं येषां तेऽपरिमितबलाः जिनवरेन्द्राः ॥

तदेवमुक्ता लब्धयः, एताश्चान्यासामपि क्षीराश्रवमध्वाश्रवसर्पिराश्रवकोष्ठबुद्धिबीजबुद्धिपदानुसारित्वाक्षीणमहानसत्वप्रभृतिलब्धीनामुपलक्षणं, तेन ता अपि प्रतिपत्तव्याः, तत्र पुंड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्द्धार्द्धक्रमेण दीयते, यावदेवमेकस्याः पीतगोक्षीरायाः क्षीरं, तत्किल चातुरक्यमित्यागमे गीयते, तद्यथोपभुज्यमानमतीव मनः शरीरप्रल्हादहेतुरुपजायते, तथा यद्वचनमाकर्ण्यमानं मनःशरीरसुखोत्पादनाय प्रभवति ते क्षीराश्रवाः, क्षीरमिव वचनमासमन्तात् श्रवन्तीति क्षीराश्रवाः, एवमग्रेऽपि, मध्वपि किमप्यतिशायि शर्करादि मधुरद्रव्यं द्रष्टव्यं, सर्पिःघृतं, कोष्ठ इव धान्यं येषां बुद्धिराजार्यमुखाद्विनिर्गतौ तदवस्थावेव सूत्रार्थौ धारयति, न किमपि कालान्तरेऽपि तयोर्गलति ते कोष्ठबुद्धयः, एकमपि सूत्रपदमवधार्य शेषश्रुतमपि तदवस्थमेव येऽवगाहन्ते ते पदानुसारिबुद्धयः, येषां पुनर्बुद्धिरेकमर्थपदं तथाविधमनुसृत्य शेषश्रुतमपि यथावस्थितं प्रभूतमर्थमवगाहते ते बीजबुद्धयः, येषां भिक्षाऽन्यैर्बहुभिरप्युपभुज्यमाना न निष्ठां याति, किन्तु तैरेव जिमितैः तेऽक्षीणमहानसाः, आदिग्रहणात् गणधरत्वपुलाकत्वतेजःसमुद्घाताहारकशरीरकरणादिलब्धयो ज्ञेयाः, अर्हत्त्वबलदेवत्ववासुदेवत्वचक्रित्वसंभिन्नश्रोतत्वजंघाचारणपूर्वधरत्वानीत्येताः सप्त लब्धयो भव्यस्त्रीणां नोपजायन्ते. अभव्यपुरूषाणां ऋजुमतिविपुलमतित्वलब्धी अपि अभव्यस्त्रीणां मध्वास्रवक्षीरास्रवसर्पिरास्रवलब्धयोऽपि, शेषास्तु भवन्तीति सामर्थ्यादवसीयते ॥ ९९ ॥ इदानीं मनःपर्यायज्ञानलब्धिनिरुपणायां तत्सामान्यत उपदिष्टमपि विषयस्वाम्यादिविशेषोपदर्शनाय ज्ञानपञ्चकक्रमायातमभिधित्सुराह

मणपज्जवनाणं पुण जणमणपरिचिंतियत्थपायडणं
माणुसखित्तनिबद्धं गुणपच्चइयं चरित्तवओ ॥७६॥

मनःपर्यवज्ञानं प्राग्निरूपितशब्दार्थं, पुनर्विशेषणार्थः, स चावधिज्ञानादिदं स्वाम्यादिभेदाद्भिन्नमिति विशेषयति अवधिज्ञानमविरतसम्यग्दृष्टेरपि भवति, मनःपर्यायज्ञानं पुनरप्रमत्तसंयतामर्पौषध्याद्यन्यतमर्द्धिप्राप्तस्यैव, तच्च द्रव्यतः संज्ञिमनोद्रव्यं विषयं क्षेत्रतो मनुष्यक्षेत्रगोचरं कालतोऽतीतानागतपल्योपमासंख्येभागविषयं, भावतो मनोगतानन्तपर्यायालम्बनं, ततोऽवधिर्भिन्नं, जनमनोभिः परिचिन्तितोऽर्थः स प्रकट्यते—प्रकाश्यतेऽनेनेति जनमनःपरिचिन्तितार्थप्रकटनं, मानुपक्षेत्रनिबद्धं, न तद्बहिर्व्यवस्थितप्राणिमनोद्रव्यविषयमिति भावः, गुणाः क्षान्त्यादयस्ते प्रत्ययाः—कारणानि यस्य तद् गुणप्रत्ययं, चारित्रवतोऽप्रमत्तसंयतस्यैव इदं स्यात्, इदं च सामान्यतश्चतुर्विधं प्रज्ञप्तं, तद्यथा द्रव्यत ऋजुमतिरनन्तानन्तप्रादेशिकान् मनोभावपरिणतपुद्गलस्कन्धान् जानाति, तानेव विपुलमति-विशुद्धतरान्, क्षेत्रत ऋजुमतिरधोलौकिकग्रामेषु यः सर्वाधस्तन आकाशप्रदेशप्रतरस्तं यावत् ऊर्ध्वं यावज्ज्योतिश्चक्रस्योपरितलं तिर्यग् यावदर्द्धतृतीयद्वीपसमुद्रेषु अर्द्धतृतीयाङ्गुलहीनेषु संज्ञिनां पञ्चेन्द्रियाणां पर्याप्तानां मनोगतान् भावान् जानाति, विपुलमतिरर्द्धतृतीयांगुलैरभ्यधिकेषु, कालत ऋजुमतिरतीतमनागतं च पल्योपमासंख्येयभागं विपुलमतिरधिकंतरविशुद्धतरं च भावत ऋजुमतिरनन्तान्, विपुलमतिस्तानेवाधिकतरान् भावान्, इदं

च मनोद्रव्याणां पर्यायानवगृह्य उपजायते पर्यायाश्च विशेषाः, विशेषग्राहकं च ज्ञानं, अतो मनःपर्यायज्ञानमेव भवति, नतु मनःपर्यायदर्शनमिति, मनःपर्यायज्ञानी च साक्षात् मनोद्रव्यपर्यायानवपश्यति बाह्यांस्तु तद्विषयभावापन्नान् अनुमानतो जानाति, कुतः ? मनसो मूर्त्तमूर्त्तद्रव्यालंबनत्वात् छद्मस्थस्य चामूर्त्तदर्शनविरोधात्, सत्पदप्ररूपणादयस्तु अवधिज्ञानवदवगन्तव्याः, नानात्वं चानाहारकापर्याप्तकौ न प्रतिपद्यमानकौ नापि पूर्वप्रतिपन्नाविति ॥ अथ केवलज्ञानं प्रतिपादयन्नाह—

अह सव्वदव्वपरिणामभावविण्णत्तिकारणमणंतं ।
सासयमप्पडिवाइ एगविहं केवलनाणं ॥७७॥

गाथा—७७

अथ—प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेष्विति वचनात् इह अथशब्द उपन्यासार्थः, सर्वाणि च तानि द्रव्याणि च जीवादीनि तेषां परिणामाः—प्रयोगविस्रसोभयजन्या उत्पादादयः पयार्याः सर्वद्रव्यपरिणामास्तेषां भावसत्ता स्वलक्षणं स्वं स्वमसाधारणं रूपमित्यर्थः तस्य विशेषेण ज्ञपनं विज्ञप्तिः विज्ञानं वा विज्ञप्तिः, परिच्छेद इत्यर्थः, तस्याः कारणं-हेतुः सर्वद्रव्यपरिणामभावविज्ञप्तिकारणं, ज्ञेयानन्तत्वादनन्तं शश्वद्भवं शाश्वतं सदोपयोगवदिति भावार्थः, न प्रतिपाति अप्रतिपाति, सदावस्थायीति, ननु यत् शाश्वतं तदप्रतिपात्येव ततः किमनेन विशेषणेन ?, उच्यते, शाश्वतं नामाऽनवरतं भवदुच्यते, तच्च कियत्कालमपि भवति, यावद्भवति तावन्निरन्तरभवनाच्छाश्वतं,

गाथा—७८

ततः सकलकालभाविप्रतिपत्त्यर्थमप्रतिपातिविशेषणोपादानं, एषः तात्पर्यार्थः अनवरतं सकलकालं च भवति, अथवा एकपदव्यभिचारेऽपि विशेषणविशेष्यभावप्रतीतिज्ञापनार्थं विशेषणद्वयोपादानं, तथाहि—शाश्वतमप्रतिपात्येव, अप्रतिपाति शाश्वतमशाश्वतं भवति, यथावधिज्ञानं एकविधमेकप्रकारं तदावरणक्षयस्यैकरुपत्वात्, केवलं च तद्ज्ञानं चेति योजितमेव, अथवा केवलं—मत्यादिनिरपेक्षं ज्ञानं—संवेदनमित्यसमस्तं इह तीर्थकरः समुपजातकेवलालोकस्तीर्थकरनामकर्मोदयतस्तथा भवस्वाभाव्यादुपकार्यकृतोपकारानपेक्षसकलसत्त्वानुग्रहाय सवितेव प्रकाशं—देशनामातनोति, तत्राव्युत्पन्नविनेयानां केषाञ्चिदेव शङ्कां भवेत्तीर्थकृतोऽपि तावद्द्रव्यश्रुतं ध्वनिरूपं विद्यते, द्रव्यश्रुतं च भावश्रुतपूर्वकं, ततो भगवानपि श्रुतज्ञानीति तदाशङ्कापनोदार्थमाह—

केवलणाणेणत्थे णाउं जे तत्थ पण्णवणजोगे ।
ते भासइ तित्थयरो वयजोग सुयं हवइ सेसं ॥७८॥

इह तीर्थकरः केवलज्ञानेनार्थान्—धर्मास्तिकायादीन् मूर्त्तामूर्त्तानभिलाप्यानभिलाप्यान् ज्ञात्वा—विनिश्चत्य, केवलज्ञानेनैव ज्ञात्वा नतु श्रुतज्ञानेन, तस्य क्षयोपशमिकभावातिक्रमात् सर्वक्षये देशक्षयाभावात्, ये तत्र, तेषामर्थानां मध्ये प्रज्ञापनायोग्याः अभिलाप्या इत्यर्थः, तान् भाषते नेतरान् तानपि प्रज्ञाप्नायोग्यान् भाषते, न सर्वान्, तेषामनन्तत्वाद्वा, चः क्रमवर्तित्वादायुषः परिमितत्वाच्च भाषितुमशक्यत्वात्, किन्तु कतिपयाने-

वानन्तभागमात्रान्, तत्रापि तान् कतिपयानेव भाषते ग्राहकापेक्षया योग्यान्, तत्रापि यावन्मात्रे भणिते शेषं स्वयमभ्युहितुमीष्टे तावन्मात्रं, नत्वभ्यूह्यमपि, तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति, न श्रुतं, तस्य भाषापर्याप्त्यादिनामकर्मोदयनिबंधनत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, स च वाग्योगो भवति श्रुतं शेषमित्यप्रधानं–द्रव्यश्रुतं, श्रोतॄणां भावश्रुतकारणतया द्रव्यश्रुतमिति व्यवह्रियत इति तात्पर्यार्थः, अन्येत्वेवं पठन्ति–'वइजोग सुअं हवइ तेसिं' तत्रायमर्थः तेषां श्रोतॄणां श्रुतकारणत्वात् स वाग्योगः श्रुतं भवति, अथवा वाग्योगः श्रुतं–द्रव्यश्रुतमेवेति । तदेवमुक्तं केवलज्ञानस्वरूपं, अथास्य गत्यादिद्वारविषया सत्पदप्ररूपणाता द्रव्यप्रमाणादीनि च विभाव्यते, तत्र सत्पदप्ररूपणतायां गत्यादीनि विंशतिद्वाराणि अङ्गीकृत्य यथाक्रमं सिद्धिगतौ मनुष्यगतौ च केवलज्ञानं, अतीन्द्रियेषु, त्रसकायाकाययोः, सयोगायोगयोः, अवेदेषु, अकषायेषु, सलेश्यालेश्ययोः, सम्यग्दृष्टिषु, केवलज्ञानिषु, केवलदर्शनिषु, संयतेषु, तथा नोसंयता नोअसंयताश्च नोसंयतासंयताः सिद्धास्तेषु च, एवमग्रेऽपि नोशब्दोऽभ्युह्यः साकारानाकारोपयोगयोः आहारकानाहारकयोः भाषकाभाषकयोः परीत्तेषु नोपरीत्तापरित्तेषु च पर्याप्तेषु नोपर्याप्तापर्याप्तेषु च बादरेषु नोसूक्ष्मबादरेषु च नोसंज्ञ्यसंज्ञिषु भव्येषु नोभव्याभव्येषु च चरमेषु, भवस्थकेवलिनां चरमत्वात्, अचरमेषु च सिद्धाना भवान्तरप्राप्त्यभावादचरमत्वात्, पूर्वप्रतिपन्नप्रतिपद्यमानकयोजना स्वधिया कर्तव्या, द्रव्यप्रमाणद्वारे प्रतिपद्यमानकानाश्रित्योत्कर्षतोऽष्टोत्तरं शतं केवलिनां प्राप्यते, पूर्वप्रतिपन्नाश्च जघन्यत उत्कर्षतश्च कोटीपृथक्त्वप्रमाणा भवस्थकेवलिनः

प्राप्यन्ते, सिद्धाः अनन्ताः, क्षेत्रस्पर्शनाद्वारयोस्तु जघन्यतो लोकस्यासंख्येयभागे केवली लभ्यते, उत्कर्पतस्तु सर्वलोके, कालद्वारे साद्यपर्यवसितं कालं सर्वोऽपि केवली भवति, अन्तरं तु केवलज्ञानस्य न विद्यते, प्रतिपाताभावात्, भागद्वारं मतिवत्, भावद्वारे क्षायिके भावे, अल्पबहुत्वद्वारं मतिवत् । तच्च केवलज्ञानं समासतश्चतुर्विधं प्रज्ञप्तं, द्रव्यादिभेदात्, तत्र द्रव्यतः सर्वद्रव्याणि जानाति पश्यति च, क्षेत्रतः सर्वक्षेत्रं, कालतः सर्वकालं, भावतः सर्वान् भावान् ॥७८॥ उक्तं केवलज्ञानं, तदभिधानाच्च नंदी, तदभिधानात्मंगलमिति ॥ तदेवं मङ्गलस्वरूपाभिधानद्वारेण ज्ञानपञ्चकमुक्तं, इह श्रुतज्ञानेनाधिकारः तथा चाह—

इत्थं पुण अहिगारो सुयनाणेणं जओ सुएणं तु ॥
सेसाणमप्पणोऽवि अ अणुओगु पईवदिट्ठन्तो ॥७९॥

अत्र पुनः प्रकृतेऽधिकारः श्रुतज्ञानेन, यतः श्रुतज्ञानेनैव शेषाणां—मत्यादिज्ञानानामात्मनोऽपि चानुयोगो—व्याख्यानं, क्रियते इति वाक्यशेषः, स्वपरप्रकाशकत्वात्तस्य, तथा च प्रदीपदृष्टान्तः—यथा प्रदीपः स्वपरप्रकाशकत्वात् स एव हि गृहेऽधिक्रियते एवमिहापि श्रुतज्ञानमिति भावः ।

॥ इति पीठिकावचूरिः समाप्ता ॥

सम्प्रति मङ्गलसाध्यः प्रकृतोऽनुयोग उपदर्श्यते, स च स्वपरप्रकाशकत्वाद्गुर्वायतत्वाच्च श्रुतज्ञानस्य, नन्वावश्यकस्यानुयोगः प्रकृत एव, पुनः श्रुतज्ञानस्येत्ययुक्तं ? उच्यते, आवश्यकमिदं श्रुतान्तर्गतमित्येतदर्थप्रकाशकत्वादेत

द्वाक्यस्येत्यदोषः, ननु यद्यावश्यकस्यानुयोगस्तदावश्यकं किमङ्गं अङ्गानि श्रुतस्कन्धः श्रुतस्कन्धाः, अध्ययनमध्ययनानि उद्देशक उद्देशकाः ? उच्यते, आवश्यकं श्रुतस्कन्धः अध्ययनानि च, न शेषविकल्पाः, ननु नन्दीव्याख्याने अङ्गानङ्गप्रविष्टश्रुतनिरूपणायामनङ्गताभिहितैव, ततश्च किमंगमगानीत्याद्याशंकाया अनुपपत्तिरिति, उच्यते, न अवश्यं शास्त्रादौ नंद्यध्ययनार्थकथन कर्तव्यमिति तद्व्याख्याऽनियमप्रदर्शनार्थत्वाददोषः, अकृते च आशङ्का संभवति, ननु मंगलार्थं शास्त्रादौ अवश्यमेव नंद्यभिधानात् कथमनियम इति, उच्यते, ज्ञानाभिधानमात्रस्यैव मङ्गलत्वात्, नावश्यमवयवार्थाभिधान कर्तव्यं, तदकरणे चाशंका भवति, किञ्च–आवश्यकव्याख्यानारम्भे शास्त्रान्तरव्याख्यानारम्भोऽयुक्त एव शास्त्रान्तरं च नन्दी, पृथक् श्रुतस्कन्धत्वात्, ननु यद्येव तर्ह्यावश्यकश्रुतस्कन्धानुयोगारंभे किमिति तदनुयोग इति, उच्यते, शिष्यानुग्रहार्थं नत्वयं नियम इति अपवादप्रदर्शनार्थं वा, एतदुक्तं भवति– कदाचित् पुरुषाद्यपेक्षया उत्क्रमेणापि, अन्यारंभेऽपि चान्यद्व्याख्यायते इति, तत्र शास्त्राभिधानमावश्यकश्रुतस्कन्धः, तद्भेदाश्चाध्ययनानि, तस्मादावश्यक निक्षेप्तव्यं श्रुतस्कन्धश्च, किञ्च–किमिदं शास्त्राभिधानं प्रदीपाभिधानवद्यथार्थाभिधानं आहोश्वित् पलाशाभिधानवदयथार्थाभिधानं ? उत डित्थाद्यभिधानवदनर्थकमेवेति परीक्ष्यं, यदि च यथार्थं तत उपादेयं, तत्रैव समुदायार्थपरिसमाप्तेरिति, अतः शास्त्राभिधानमेवालोच्यते श्रमणादिभिरवश्यमुभयकालं कर्तव्यमित्यावश्यक, यद्वा ज्ञानादिगुणकदंबकं मोक्षो वा आ–समन्ताद्वश्यः क्रियतेऽनेनेत्या तन्नामावश्यकं, तच्चतुर्विध–नामादिभेदात्, तत्र यस्य जीवस्याजीवस्योभयस्य वाऽऽवश्यकमितिनामक्रियते तन्नामावश्यकं, तथा

गाथा–७७

गाथा–७८

काष्ठकर्मादिपु अक्षवराटादिषु वा सद्भावस्थापनयाऽसद्भावस्थापनया वा यदावश्यकमिति स्थाप्यते तत् स्थापनावश्यकं, द्रव्यावश्यकं द्विधा—आगमतो नोआगमतश्च, तत्रागमतो यस्यावश्यकमिति पदं शिक्षितं स्थितं जितं मितं परिजितं नामसमं घोपसमं अहीनाक्षरं अनत्यक्षरं अव्याविद्धाक्षरं अस्खलितं अमिलितं, अव्यत्याम्रेडितं प्रतिपूर्णघोषं कण्ठौष्ठविप्रमुक्तं वाचनोपगतं भवति सपुरुषो द्रव्यावश्यकं, तत्र शिक्षितं—पठनक्रियया अन्तं नीतं, तदेवाविस्मरणतश्चेतसि स्थितत्वात् स्थितं, परावर्तनं कुर्वतः परेण वा क्वचित्पृष्टस्य यत् शीघ्रमागच्छति तज्जितं, अक्षरसंख्यया पदसंख्यया वा परिच्छिन्नं मितं, परि—समन्तात् जितं परिजितं, परावर्तनं कुर्वतो यत्क्रमेणोत्क्रमेण वा समायातीति भावः, नामसमं—यथा कस्यचित् स्वनाम शिक्षितं स्थितं जितं मितं परिजितं च स्यात्, तथैव तदपीति भावः यथा गुरुणाऽभिहिता घोपास्तथा यत्र शिष्येणापि समुच्चार्यन्ते तद् घोषसमं, एकेनाप्यक्षरेणाहीनमहीनाक्षरं, एकेनाप्यक्षरेणानधिकमनत्यक्षरं, तथा न व्याविद्धानि विपर्यस्तरत्नमालागतरत्नानीव विपर्यस्तान्यक्षराणि यत्र तदव्याविद्धाक्षरं, उपलशकलाद्याकुलभूभागे लाङ्गलमिव यन्न स्खलति तदस्खलितं, अनेकशास्त्रसंबंधीनि सूत्राण्येकत्र मीलयित्वा यत् पठयते तत् मीलितं यन्न तथा तदमीलितं, अव्यत्याम्रेडितं अस्थानविरतिरहितं, अत एव प्रतिपूर्णं हीनाधिकाक्षराभावात्, प्रतिपूर्णघोषं गुरुलघ्वस्वरितोदात्तादिघोषाणामुच्चारणात्, वाचनया—प्रश्नेन परिवर्तनया उत्प्रेक्षया धर्मकथया उपगतं प्राप्तं वाचनोपगतं, शेषं सुगमम् ।

नोआगमतो द्रव्यावश्यकं त्रिधा, ज्ञशरीरद्रव्यावश्यके सुगमे, तद्व्यतिरिक्तं त्रिधा लौकिकं कुप्रावचनिकं

लोकोत्तरं च, तत्र ये इमे राजेश्वरतलवरमाडंबिकादयः प्रातरुत्थाय शरीरचिन्तामुखदन्तप्रक्षालनराजकार्यादि कुर्वन्ति तल्लौकिकं द्रव्यावश्यकं, ये पुनश्चरकप्रमुखाः परिव्राजकाः प्रातरुत्थाय स्कन्दादिदेवतागृहसंमार्जनोपलेपनधूपनादि-कुर्वन्ति तत् कुप्रावचनिकं द्रव्यावश्यकं, यत्पुनरेते श्रमणगुणमुक्तयोगिनः षड्जीवनिकायनिरनुकंपा हया इवोद्दामानो गजा इव निरंकुशाः पाण्डुरपटप्रावरणा जिनानामनाज्ञया स्वच्छन्दसो विहृत्योभयकालमावश्यककरणायोपतिष्ठन्ते तल्लोकोत्तरं द्रव्यावश्यकं, भावशून्यत्वेनाभिप्रेतफलाभावात् ।

भावावश्यकमपि द्विधा—आगमतो नोआगमतश्च, तत्रागमतो भावावश्यकं आवश्यकज्ञाता उपयुक्तः, तदुपयोगानन्यत्वात् , अथवा आवश्यकार्थोपयोगपरिणाम एव, नोआगमतस्त्रिधा—लौकिकादिभेदात् , तत्र यत् पूर्वाह्णे भारतव्याख्यानं अपराह्णे रामायणव्याख्यानमेतल्लौकिकं भावावश्यकं, यत्पुनरेते चरकादिपाखण्डस्था निजनिजदेवतास्मरणजापप्रमुखमनुष्ठान प्रकुर्वन्ति तत् कुप्रावचनिकं भावावश्यकं, यत् पुनः श्रमणादिश्चतुर्विधः संघ एकान्ते विशुद्धचित्त उभयकालं प्रतिक्रमणं कुरुते तल्लोकोत्तर भावावश्यकं, ज्ञानक्रियारूपोभयपरिणात्मकत्वात् , मिश्रवचनश्चात्र नोशब्दः, अनेनैव च लोकोत्तरेणेहाधिकारः, अस्य चामून्येकार्थिकानि आवश्यक १ मवश्यकरणीयं २ ध्रुवं ३ कायनिग्रहो ४ विशुद्धिः ५ अध्ययनषड्वर्गः ६ न्यायः ७ आराधना ८ मार्ग ९ इति, आवश्यकशब्दव्युत्पत्तिप्रदर्शिका चेयं गाथा—"समणेण सावएण य अवस्सकायव्वं हवइ जम्हा। अन्तो अहो निसिस्स य तम्हा आवस्सयं नाम ॥१।" [अनु० ३]

श्रुतमपि चतुर्द्धा नामादिभेदात् , तत्र नामस्थापने प्रतीते, द्रव्यश्रुत द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता अनुपयुक्तः, नोआगमतस्त्रिविधं, ज्ञशरीरभव्यशरीरे प्राग्वत् , तद्व्यतिरिक्त तु पुस्तकपत्रन्यस्तं, भावश्रुत द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञातोपयुक्तः, नोआगमतो द्विधा—लौकिकं लोकोत्तर च, तत्राद्यं भारतरामायणादि, द्वितीयं द्वादशांगं गणिपिटकं, आवश्यकं च नोआगमतो भावश्रुतं, नोशब्दोऽत्रैक-देशवचनः, तस्य चेमान्येकार्थिकानि—श्रुतं १ सूत्रं २ ग्रन्थः ३ सिद्धान्तः ४ प्रवचनं ५ आज्ञा ६ वचनं ७ उपदेशः ८ प्रज्ञापना ९ आगमः १०, स्कन्धोऽपि चतुर्द्धा, तत्राद्यभेदौ प्रतीतौ, द्रव्यस्कन्धो द्विधा आगमादि-भेदात् , तत्र आगमतः प्राग्वत् , नोआगमतोऽपि प्राग्वत्त्रिधा आद्यभेदौ, प्रतीतौ, तद्व्यतिरिक्तस्त्रिविधः, सचित्तोऽ-चित्तो मिश्रश्च, सचित्तो द्विपदादिः अचित्तो द्व्यणुकादिः मिश्रः सेनादेर्देशादिर्वा, भावस्कन्धो द्विधा—आगमतो ज्ञाता उपयुक्तः, नोआगमतस्त्विदमावश्यकं, नोशब्दो देशवचनः, सकलश्रुतस्कन्धापेक्षयाऽवश्यकश्रुतस्कन्धस्यैकदेश-त्वात् , सामायिकादीनां श्रुतविशेषाणां स्कन्धः श्रुतस्कन्धः, आवश्यकं च तत् श्रुतस्कन्धश्च आवश्यकश्रुतस्कन्धः ।

ननु कस्मादिदमावश्यकं षडध्ययनात्मकं ?, उच्यते, षडर्थाधिकारभावात् , ते चामी सामायिकादीनां यथायोगं ज्ञेयाः—"सावज्जजोगविरइ १ उक्कित्तण २ गुणवओ अ पडिवत्ती ३ खलिअस्स ४ निंदणा वणतिगिच्छ ५ गुणधारणा ६ चेव ॥१॥ [अनु० ६ वि० ९८२] ।

सद्यावद्येन–पापेन वर्त्तन्त इति सावद्यास्ते च ते योगा–व्यापाराश्चेति तेषां विरतिः– विरमणं, सामायिकार्थाधिकारः १, उत्कीर्तनेति गुणोत्कीर्त्तना अर्हतां चतुर्विंशतिस्तवस्य २, गुणाः–ज्ञानादयो मूलोत्तराख्या वा तद्वतः प्रतिपत्तिः वन्दनाध्ययनस्य ३, चः समुच्चये, स्खलितस्येति–श्रुतशीलस्खलितस्य निन्दना ४, प्रतिक्रमणस्य चरित्रात्मनो व्रणचिकित्सा–अपराधव्रणसंरोहणं कायोत्सर्गस्य ५, अपगतव्रणातिचारमुपचितकर्मविशरणार्थं अनशनादिगुणसंधारणा प्रत्याख्यानस्य, ६, कोऽर्थः ? अनन्तरोक्तपञ्चविधावश्यकानुष्ठानेन अपगता ये व्रतानामतिचारास्तेभ्यो ये इतरे सामायिकादिकायोत्सर्गान्तपञ्चविधावश्यकादशुद्धास्तैरुपचितं यत्कर्म तद्विशरणार्थमनशनादिगुणसंधारणा प्रत्याख्यानस्याधिकारः, इदमुक्तं भवति–इह केचिदतिचारा मन्दक्लेशजनिताः कायोत्सर्गावसानावश्यकानुष्ठानतोऽपि निवर्त्तन्ते, अपरे त्वधिकृतसंक्लेशनिर्वर्तितास्तपःशोध्या भवन्ति तैर्यदुपचितं कर्म तन्निर्जरणार्थमनशनादिगुणप्रतिपत्तिरधिकारः षष्ठावश्यकस्य ६ तत्र प्रथममध्ययनं सामायिकं, समभावलक्षणत्वाच्चतुर्विंशतिस्तवादीनां च तद्भेदत्वात् प्राथम्यमस्य, अस्य च महापुरस्येव चत्वार्यनुयोगद्वाराणि, अनुयोगः–सूत्रस्य व्याख्यानं तस्य द्वाराणीव द्वाराणि तत्प्रवेशमुखानि, यथाहि–अकृतद्वारं नगरमनगरमेव स्यात्, कृतैकद्वारमपि हस्त्यश्वादिसंकुलत्वाद्दुःखसंचारं, कृतचतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगमं, एवं सामायिकपुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं स्यात्, कृतैकानुयोगद्वारमपि कृच्छ्रेण द्राघीयसा च कालेनाधिगम्यते, विहितसप्रभेदोपक्रमादिद्वारचतुष्टयं तु सुखाधिगमं अल्पीयसा च कालेनाधिगम्यते, ततः फलवाननुयोगद्वारोपन्यासः, तानि चामूनि–उपक्रमो निक्षे-

गाथा–७७

गाथा–७८

योऽनुगमो नयश्च, तत्र शास्त्रमुपक्रम्यते—समीपमानीयते निक्षेपस्यानेनेत्युपक्रमः शास्त्रस्य न्यासदेशानयनमित्यर्थः, निक्षेपयोग्यतापादनमिति यावत्, उपक्रमान्तर्गतभेदैर्हि विचारितं निक्षिप्यते, नान्यथा, निक्षेपणं निक्षेपो—नामादिभेदैः शास्त्रस्य न्यसनं, अनुगमनमनुगमः—सूत्रस्यानुकूलः परिच्छेदः, नयनं नयः, वस्तुनो वाच्यस्य पर्यायाणां संभवतोऽधिगम इत्यर्थः, आह पामुपक्रमादिद्वाराणां किमित्येवं क्रमः ?, उच्यते, नह्यनुपक्रान्तमसमीपीभूतं सन्निक्षिप्यते, न चानिक्षिप्तं नामादिभिरर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयैर्विचार्यते, अतोऽयमेव क्रमः। तत्रोपक्रमो द्विविधः—शास्त्रीय इतरश्च, तत्रेतरः षड्विधः—नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्, नामस्थापने सुगमे, द्रव्योपक्रमो द्विधा, तत्रागमत उपक्रमपदार्थज्ञस्तत्र चानुपयुक्तः, नोआगमतस्त्रिधा, ज्ञशरीरभव्यशरीरे प्रतीते, तद्व्यतिरिक्तस्त्रिधा सचिताचित्तमिश्रभेदात्, तत्र सचितद्रव्योपक्रमस्त्रिधा—द्विपदचतुष्पदापदोपाधिभेदात्, पुनरेकैको द्विधा—परिकर्मणि वस्तुविनाशे च, तत्र परिकर्मनाम द्रव्यस्य गुणविशेषपरिणामकरणं, वस्त्वभावापादनं—वस्तुविनाशः, तत्र परिकर्मणि सति द्विपदोपक्रमो यथा—घृताद्युपभोगेन पुरुषस्य वर्णादिकरणं, अथवा कर्णस्कन्धवर्द्धनादि, अन्ये तु शास्त्रगंधर्वनृत्यादिकलासंपादनमपि द्रव्योपक्रमं व्याचक्षते, इदं पुनरसाधु, विज्ञानविशेषात्मकत्वात् शास्त्रादिपरिज्ञानस्य, तस्य च भावत्वात्, किन्त्वात्मद्रव्यसंस्कारविवक्षापेक्षया शरीरस्य वर्णादिकरणवत् स्यादपीति, एवं शुकसारिकादीनामपि शिक्षागुणविशेषकरणं भावनीयं, एवं गजादीनां शिक्षाविशेषगुणकरणं चतुष्पदोपक्रमः, अपदानां—वृक्षादीनां वृक्षायुर्वेदोपदेशाद्वार्द्धक्यादिगुणापादनमपदोपक्रमः, वस्तुविनाशे च पुरुषादीनां खड्गादिभि-

विनाशः, तथाऽचित्तद्रव्योपक्रमः परिकर्मणि यथा पद्मरागमणेः क्षारमृत्पुटपाकादिना वैमल्यापादानं, तद्विनाशे विनाशः, मिश्रद्रव्योपक्रमः परिकर्मणि कटकादिविभूषितपुरुषादिद्रव्यस्य शिक्षापादनं वस्तुविनाशे च खड्गादिभिर्विनाशः, कारकयोजना स्वधिया भावनीया, तद्यथा–द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्वा द्रव्ये द्रव्येषु वा उपक्रमो द्रव्योपक्रमः, तत्र द्रव्यस्योपक्रमो यथा एकस्य पुरुषस्य शिक्षाकरण, द्रव्याणां तेषां बहूनां, द्रव्येण फलकेन समुद्रतरणं, द्रव्यैर्बहुभिः फलकैर्नावं निष्पाद्य समुद्रोल्लंघनं, द्रव्येऽपि एकस्मिन् फलके उपविष्टस्य शिक्षाकरणं, द्रव्येषु बहुषूपविष्टस्य, तथा क्षेत्रोपक्रमोऽपि द्विधा–परिकर्मणि क्षेत्रविनाशे च, परिकर्मणि क्षेत्रोपक्रमो नावा समुद्रस्योल्लंघनं हलादिभिर्वा इक्ष्वादिक्षेत्रस्य परिकर्मणा, वस्तुविनाशो क्षेत्रोपक्रमो गजबन्धनादिभिः क्षेत्रस्य विरूपीकरण ।

ननु क्षेत्रममूर्तं नित्य च ततस्तस्य कथ करणविनाशौ ?, उच्यते, तात्स्थ्यात्तद्व्यपदेश इतिकृत्वा तद्व्यवस्थितद्रव्यकरणविनाशभावादुपचारतोऽदोषः, तथा कालो नाम वर्त्तनादिरूपत्वाद् द्रव्यपर्यायः, ततो द्रव्यस्य परिकर्मणा विनाशो वा कालस्यापि तावुपचर्येते, इति कालोपक्रमः चन्द्रोपरागादिपरिज्ञानलक्षणो वा, भावोपक्रमो, द्विधा–आगमतो ज्ञातोपयुक्तः, नोआगमतो द्विधा–प्रशस्तोऽप्रशस्तश्च, अप्रशस्तभावोपक्रमे ब्राह्मणीगणिकामात्यादीनामुदाहरणानि, प्रशस्तः श्रुतादिनिमित्तमाचार्यः भावोपक्रमः, ननु व्याख्याङ्गप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधान मनर्थकं, न, तस्यापि व्याख्याङ्गत्वात्, उक्तञ्च "गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि। तस्माद् गुर्वा-

राधनपरेण हितकाङ्क्षिणा भाव्यम् ॥१॥" [प्रश्न० ६९] ।

ननु यद्येवं तर्हि गुरुभावोपक्रम एवाभिधातव्यो, न शेषाः, निष्प्रयोजनत्वात्, न गुरुचित्तप्रसादनार्थमेव-तेषामुपयोगित्वात्, तथाहि—गुरोस्तथाविधकार्योत्पत्तौ तच्चित्तप्रसादनार्थमेवाशनादिद्रव्यं व्याख्यानादिक्षेत्रं प्रव्रज्यालग्नादिकालं चोपक्रामतो विनेयस्य द्रव्याद्युपक्रमा अपि सार्थका एव, अथवोपक्रमसाम्यात् प्रकृते निरुपयोगिनोऽपि अन्यत्रोपयोक्ष्यन्त इत्युपन्यस्तत्वाददोषः, अथ शास्त्रीय उच्यते, सोऽपि षोढा, तद्यथा—आनुपूर्वी १, नाम २, प्रमाणं ३, वक्तव्यता ४, अर्थाधिकारः ५, समवतारः ६, तत्रानुपूर्वी दशधा—नामानुपूर्वी १, स्थापनानुपूर्वी २, द्रव्यानु० ३, क्षेत्रा० ४, काला० ५, गणना० ६, उत्कीर्त्तना० ७, संस्थाना० ८, सामाचार्यानु० ९, भावानुपूर्वी १०, एतासु दशस्वानुपुर्वीषु यथासंभवमवतार्यमिदं सामायिकाध्ययनं, विशेषतस्तु उत्कीर्त्तनानुपुर्व्यां गणनानुपर्व्यां च समवतरति, उत्कीर्तनं नाम संशब्दनं, यथा सामायिकं चतुर्विंशतिस्तव इत्यादि, गणनं—संख्यानं, एकं द्वे त्रीणि चत्वारीत्यादि, सा च गणनानुपूर्वी त्रिधा—पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी च, तत्र सामायिकं पूर्वानुपूर्व्यां प्रथमं, पश्चानुपूर्व्यां षष्ठं, अनानुपूर्व्यां त्वनियतं—क्वचित्प्रथमं क्वचिद्द्वितीयमित्यादि, तत्रानानुपूर्वीणामयं करणोपाय एतद्वृहद्वृत्तेर्ज्ञेयः, इदानीं नाम वक्तव्यं, प्रतिवस्तुनमनान्नाम, तच्चैकादिदशान्तं यथाऽनुयोगद्वारेषु तथा वक्तव्यं, सामायिकस्य षड्नाम्न्यवतारः, तत्र च षड्भावा औदयिकादयो निरूप्यन्ते, तत्र क्षायोपशमिक एव सर्वश्रुतावतारः तस्य क्षायोपशमिकत्वात्, तथा प्रमाणं द्रव्यादि-

प्रमीयतेऽनेनेति प्रमाण, तच्च प्रमेयभेदादेव चतू रूपं द्रव्यप्रमाणादिभेदात्, तत्र सामायिकं भावात्मकत्वाद्भाव-प्रमाणविषय, तच्च भावप्रमाणं त्रिधा–गुणनयसंख्याभेदात्, गुणप्रमाणं द्विधा–जीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्र जीवादपृथग्भूतत्वात् सामायिकस्य जीवगुणप्रमाणे समवतारः, जीवगुणप्रमाणमपि त्रिधा–ज्ञानदर्शनचारित्र-भेदात्, तत्र बोधात्मकत्वात् सामायिकस्य ज्ञानगुणप्रमाणे समवतारः, ज्ञानगुणप्रमाणमपि चतुर्द्धा, तद्यथा–प्रत्यक्षमनुमानमुपमानमागमः, तत्र सामायिकस्य प्रायः परोपदेशसव्यपेक्षत्वादागमप्रमाणे समवतारः, आगमोऽपि द्विधा लौकिकलोकोत्तरभेदात्, तत्रेदं सामायिकं सर्वज्ञप्रणीतत्वाल्लोकोत्तरागमे समवतरति, ननु लोकोत्तरागमोऽपि सूत्रार्थोभयरूपत्वात्त्रिविधः, तत इदं क्वान्तर्भवति ?, उच्यते, सामायिकस्य सूत्रार्थोभयरूपत्वात्त्रिविधेऽपि, ननु सोऽपि त्रिधा आत्मागमः अनन्तरागमः परम्परागमश्च, ततः क्वेद समवतरति ?, उच्यते, इदं सूत्रतो गौतमादी-नामात्मागमः, तच्छिष्याणां जम्बूस्वाम्यादीनामनन्तरागमः, प्रतिशिष्याणां तु प्रभवादीनां परंपरागमः, तथाऽर्थतो-ऽर्हतामात्मागमः, गणधराणामनन्तरागमः, तच्छिष्याणां परम्परागमः, एवं सूत्रतोऽर्थतश्च त्रिविधे प्रमाणेऽन्तर्भवति, नयप्रमाणे तु मूढनयत्वात्तस्य नाधुनावतारः, वक्ष्यति च–'मूढ नइअं तु सुअ'मित्यादि,

अथ संख्याप्रमाणं, तत्र संख्या–नामस्थापनाद्रव्यक्षेत्रकालौपम्यपरिमाणभावभेदादष्टधा, यथानुयोगद्वारेषु तथा वक्तव्या, तत्रोत्कालिकादिश्रुतप्रमाणसंख्याया समवतारः, तत्र सूत्रतः सामायिकं परिमितपरिमाण, अर्थतोऽनन्तप-र्यायत्वादपरिमितपरिमाणं, अथ वक्तव्यता, सा च त्रिधा–स्वसमयवक्तव्यता परसमयवक्तव्यता उभयसमयवक्तव्यता

च, स्वसमयः, स्वसिद्धान्तः, वक्तव्यता—पदार्थविचारः तत्र स्वसमयवक्तव्यतायां अस्य समवतारः, एवं सर्वाण्यध्ययनानि स्वसमयवक्तव्यतायां समवतारणीयानि, एवं परसमयप्रतिपादकानामुभयसमयप्रतिपादकानां चाध्ययनानामपि सम्यग्दृष्टिपरिगृहितं परसमयसम्बन्ध्यपि सम्यक्श्रुतमेव, हेयोपादेयार्थानां सम्यग्हेयोपादेयतया परिज्ञानात्, अर्थाधिकारः स चाध्ययनसमुदायार्थः, स्वसमयवक्तव्यतैकदेशः, स च सर्वसावद्यविरतिरूपः, अथ समवतारः, स च लाघवार्थं प्रतिद्वारं समवतारणाद्वारेण प्रदर्शित एव ।

उक्त उपक्रमः, इदानीं निक्षेपः, स च त्रिधा—ओघनिष्पन्नः नामनिष्पन्नः सूत्रालापकनिष्पन्नश्च, तत्रौघो नाम यत् सामान्यं शास्त्राभिधानं, तच्चेह चतुर्द्धा—अध्ययनमक्षीणमायः क्षपणा च, पुनरेकैकं नामादिभेदाच्चतुर्द्धा—नामाध्ययनमित्यादि, तत्रेदं सामायिकाध्ययनं भावाध्ययने भावाक्षीणे भावाये भावक्षेपणायां चायोज्यं, तत्र यस्मादनेन शुभमध्यात्मं जन्यतेऽथवाऽऽनीयतेऽधिकं वाऽयनं बोधस्य संयमस्य मोक्षस्य वा इत्यमित्यध्ययनं, एवं शेषाणामपि निरुक्तयोऽभ्युह्याः, नामनिष्पन्ने निक्षेपे सामायिकमिति विशेषकं नाम, तच्च नामादिभेदाच्चतुर्द्धा, इदं च निरुक्तिद्वारे सूत्रस्पर्शिकनिर्युक्तौ च प्रपञ्चेन वक्ष्यामः। उक्तो नामनिष्पन्नो निक्षेपः, अधुना सूत्रालापकनिष्पन्ननिक्षेपस्यावसरः, स च प्राप्तावसरोऽपि न निक्षिप्यते, कस्मादिति चेत् ?, उच्यते, सूत्राभावात्, असति हि सूत्रे कस्यालापकस्य निक्षेपः ?, ततोऽस्तीतः तृतीयमनुयोगद्वारमनुगमाख्यं तत्रैव निक्षेप्स्यामः ।

इदानीमनुगमावसरः, स च द्विधा—निर्युक्त्यनुगमः सूत्रानुगमश्च, तत्राद्यस्त्रिधा—निक्षेपनिर्युक्त्यनुगम उपोद्-

घातनिर्युक्त्यनुगमः, सूत्रस्पर्शिकनिर्युक्त्यनुगमः, तत्र निक्षेपनिर्युक्त्यनुगमो नाम यदधो नामादिन्यासान्व्याख्यानमुक्तं ततः सोऽनुगत एव, इदानीमुपोद्घातनिर्युक्त्यनुगमप्रस्तावः, स च उद्देशादिद्वारलक्षणः, अस्य च महार्थत्वात् मा भूद्विघ्न इति प्रारम्भेऽस्य मङ्गलमुच्यते ॥८०॥

तित्थयरे भगवंते, अणुत्तरपरक्कमे अमियनाणी ।
तिण्णे सुगइगइगए, सिद्धिपहपदेसए वंदे ॥८०॥

तीर्थं द्विधा—द्रव्यतो भावतश्च, द्रव्यतीर्थं नद्यादीनामनपायः समभूभागः, भावतीर्थं संघः, तत्करणशीलाःस्तान्, वन्द इति क्रिया सर्वत्र योज्या, "ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य, षण्णां भग इतींगना ॥१॥" सोऽस्ति येषां ते भगवन्तः तान्, ननु तीर्थकरानित्यनेनैव भगवत इत्यस्य गतार्थत्वात् तीर्थकृतामुक्तलक्षणभगाव्यभिचारान्नार्थोऽनेनेति, न, अन्यमतकल्पिततीर्थकरतिरस्कारपरत्वादस्य, तथा च न तेऽविकलभगवन्तः, तथा परे—शत्रवः क्रोधादयस्तेषामाक्रमः—पराजय उच्छेदः सोऽनुत्तरो येषां तान्, नन्वैश्वर्यादिभगवन्तो ये तेऽनुत्तरपराक्रमा एव, अन्यथा भगयोगाभावात्, तत इदमतिरिच्यते, न अनादिसिद्धैश्वर्यादिसमन्वितपरमपुरुषप्रतिपादनपरमतनिरोसार्थत्वान्न दोषः, अकर्त्रात्मवादव्यवच्छेदार्थं वा, अमितज्ञानिनः, ननु येऽनुत्तरपराक्रमास्तेऽमितज्ञानिन एव नियमेन, क्रोधादिक्षयोत्तरकालभावित्वादमितज्ञानस्य, उच्यते, क्लेशक्षयेऽ-

प्यमितज्ञानानभ्युपगमप्रधानवादनिरासार्थं एतदुपन्यासः, स्वसिद्धान्तप्रसिद्धच्छद्मस्थवीतरागनिरासार्थं वा, तथा तरन्ति स्म भवार्णवं तीर्णास्तान्, सुगतयः—सिद्धास्तेषां गतिर्मोक्षलक्षणा तां गतास्तान्, अनेन चाप्राणिमाद्यष्टविधैश्वर्यस्वेच्छाविलसनशीलपुरुपतीर्णत्ववादपरमतनिरासमाह, सिद्धिपथप्रदेशकान्, तद्धेतुभूतसामायिकप्रतिपादकत्वात्, एवमविशेपेण ऋषभादीनां मङ्गलार्थं वन्दनमुक्तं ॥८०॥ इदानीमासन्नोपकारित्वाद्वर्द्धमानवन्दनमाह—

वंदामि महाभागं, महामुणिं महायसं महावीरं ।
अमरनररायमहिअं, तित्थयरमिमस्स तित्थस्स ॥८१॥

भागोऽचिन्त्यशक्तिः, महान् भागो यस्येति महाभागो महाप्रभावस्तं, मन्यते जगत्त्रिकालावस्थामिति मुनिः, सर्वज्ञत्वात्, महांश्चासौ मुनिश्च महामुनिः तं, त्रैलोक्यव्यापित्वान्महद्यशोऽस्येति महायशास्तं महावीरमित्यभिधानं, अथवा "विदारयति यत्कर्म, तपसा च विराजते । तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥१॥" तथा अमरनराणां राजनः—इन्द्रचक्रयादयस्तैर्महितं, तीर्थकरणशीलं, अस्य वर्तमानकालावस्थायिनस्तीर्थस्य ॥ एवमर्थवक्तुर्मङ्गलार्थं वन्दनमुक्त ॥८१॥ इदानीं सूत्रकर्तृप्रभृतीनामपि पूज्यत्वाद्वन्दनमाह—

इक्कारसवि गणहरे पवायए पवयणस्स वंदामि ।
सव्वं गणहरवंसं वायगवंसं पवयणं च ॥८२॥

अपिः समुच्चये, अनुत्तरज्ञानदर्शनादिधर्म्मगणं धारयन्तीति गणधरास्तान्, प्रकर्षेण प्रधाना आदौ वा वाचकाः प्रवाचकास्तान्, कस्य ? प्रवचनस्य द्वादशाङ्गस्य, एवं तावन्मूलगणधरवन्दनमुक्तं, तथा सर्वं गणधर-आचार्यास्तेषां वंशः—परम्परया प्रवाहस्तं, वाचका—उपाध्यायास्तेषां वंशस्तं, तथा प्रवचनं—आगमं च, ननु वंशद्वयस्य प्रवचनस्य च कथं वन्द्यता ?, उच्यते यथा अर्थवक्ताऽर्हन् वन्द्यः, सूत्रवक्तारश्च गणधराः, एवं यैरिदमर्थसूत्ररूपं प्रवचनमाचार्योपाध्यायैरानीतं तद्वंशोऽप्यानयनद्वारेणोपकारित्वाद्वन्द्य एव, प्रवचनं तु साक्षादेवोपकारित्वाद्वन्द्यम् ॥८२॥ इदानीं प्रकृतमुपदर्शयति—

ते वंदिऊण सिरसा अत्थपुहुत्तस्स तेहिं कहियस्स ।
सुयनाणस्स भगवओ निज्जुत्तिं कित्तइस्सामि ॥८३॥

तान्—अनन्तरोक्तान् तीर्थकरादीन् वन्दित्वा शिरसा, उपलक्षणत्वान्मनःकायाभ्यां च, निर्युक्तिं कीर्तयिष्यामि, कस्य ? श्रुतज्ञानस्य, अर्थपृथक्त्वस्येति—अर्थात् कथञ्चिद्भिन्नत्वात् सूत्रं पृथक् उच्यते, प्राकृतत्वाच्च पृथगेव पृथक्त्वं,

कृतावश्यकप्रथमाध्ययनसामायिकाख्योपोद्घातनिर्युक्तिमभिधित्सुराह—

सामाइयनिज्जुत्तिं वुच्छं उवएसियं गुरुजणेणं ।
आयरियपरंपरएण आगयं आणुपुव्वीए ॥८७॥

सामायिकनिर्युक्तिं वक्ष्ये उपदेशितं गुरुजनेन–तीर्थंकरगणधरलक्षणेन, पुनरुपदेशकालादारभ्य आचार्यपारंपर्येणागतं, स च परंपरको द्विधा द्रव्यतो भावतश्च, तत्र द्रव्यपरंपरकः पुरुषपारंपर्येणेष्टकानामानयनं, भावपरंपरकस्त्वियमेव–उपोद्घातनिर्युक्तिराचार्यपारंपर्येणागता, कथं ?, आनुपूर्व्या–परिपाट्या, सुधर्मस्वामिनो जम्बूस्वामिना ततः प्रभवेन ततोऽपि शय्यंभवादिभिरित्यादि, ननु द्रव्यस्येष्टकादेर्युक्तं पारंपर्येणागमनं, भावस्य तु श्रुतपर्यायरूपत्वाद्वस्त्वन्तरसंक्रमणाभावात् पारंपर्येणागमनानुपपत्तिः, न च तद्बीजभूतगणधरतीर्थकरशब्दस्यागमनमस्ति, तस्य श्रुतानन्तरमेवोपरमात्, अत्रोच्यते, उपचाराददोषः, यथा कार्षापणाद् घृतं, घटादिभ्यो वा रूपविज्ञानमिति, एवमियमाचार्यपारंपर्यहेतुत्वात्तत आगतेत्युच्यते, आगतेव आगता, बोधवचनश्चायमागताशब्दो, न गमिक्रियावचन इति ॥८७॥ साम्प्रतं निर्युक्तिस्वरूपाभिधानायाह—

णिज्जुत्ता ते अत्था जं बद्धा तेण होइ णिज्जुत्ती ।
तहविय इच्छावेइ विभासिउं सुत्तपरिवाडी ॥८८॥

निर्णययुक्ताः निर्युक्ताः, निश्चिता इत्यर्थः, ये ते प्रसिद्धाः अर्थाः सूत्रोक्ता जीवादयः पदार्था यद्यस्माद् बद्धा–गाथात्वेन ग्रथितास्तेनेय भवति निर्युक्तिः, निर्युक्तानां सूत्रे प्रथममेव सम्बद्धानां सतामर्थानां व्याख्यारूपा युक्तिः-योजनं, युक्तशब्दलोपान्निर्युक्तिः, ननु यदि सूत्रे सम्बद्धाः सन्ति ततः किमनया? उच्यते, यद्यपि सूत्रे सम्बद्धाः सन्ति तथापि सूत्रे निर्युक्तानपि अर्थान् विभावितु–व्याख्यातुं सूत्रपरिपाटी–सूत्रपद्धतिः, एपयतीव कर्त्री, एपयति–प्रयोजयति, इयमत्रभावना–अप्रतिबुद्ध्यमाने श्रोतरि गुरु तदनुग्रहार्थं सूत्रपरिपाट्येव विभावितुमेपयति इच्छत मा प्रतिपादयितुमितीत्थ प्रयोजयतीव, व्याख्या च निर्युक्तिरित्यतः पुनर्योजनमित्थमदोपायैव, यदुक्त– 'अर्थपृथक्त्वस्य तैः कथितस्ये'ति तीर्थकरगणधरैः ॥८८॥ इदानीं तेपामेव सम्पदतिशयप्रतिपादनार्थं गाथाद्वयमाह --

तवनियमनाणरुक्खं आरूढो केवली अमियनाणी ।
तो मुयइ नाणवुट्ठिं भवियजणविबोहणट्ठाए ॥८९॥

रूपको नामात्रालङ्कारः, तत्र वृक्षो द्विधा–तत्र द्रव्यवृक्षः प्रधानतरुः कल्पवृक्षः, यथा तमारुह्य कश्चिद्गन्धादि गुणसमन्वितानां कुसुमानां सञ्चयं कृत्वा तदधोभागवर्त्तिनां पुरुपाणां तदारोहणासमर्थानामनुकम्पया कुसुमानि-

निसृजति, तेऽपि च भूगतरजोगुण्डनभयात् विमलविस्तीर्णपटैः प्रतीच्छन्ति, पुनर्यथोपयोगमुपभुञ्जानाः परेभ्यश्चोपकुर्वाणाः सुखमाप्नुवन्ति, एवं भावकृक्षेऽपि सर्वमिदमायोज्यं, तपश्च नियमश्च ज्ञान च तपोनियमज्ञानानि तान्येव वृक्षः तं, तत्र तपः—अनशनादि द्वादशधा नियम—इन्द्रियसंयमः, इन्द्रियाणि श्रोत्रादीनि, नोइन्द्रियाश्च कषायाः, ज्ञानमिह केवलं—सम्पूर्णं गृह्यते, इत्थंरूपं वृक्षमारूढः, तत्र ज्ञानस्य सम्पूर्णासंपूर्णरूपत्वादाह—केवलं—सम्पूर्णं ज्ञानमस्यास्ति इति केवली, अयं श्रुतकेवल्यादिरपि स्यादतस्तन्निरासाय अमितज्ञानीति विशेषणं, ततो वृक्षात् मुञ्चति, ज्ञानवृष्टिं, 'कारणे कार्योपचारात्' ज्ञानकारणभूतशब्दकुसुमवृष्टिं भव्यजनविबोधनार्थम् ॥८९॥

तं बुद्धिमएण पडेण गणहरा गिण्हिउ निरवसेसं ।
तित्थयरभासियाइं गंथंति तओ पवयणट्ठा ॥९०॥

तां ज्ञानकुसुमवृष्टिं बुद्धिमयेन—बुद्ध्यात्मकेन पटेन गणधरा गौतमादयो ग्रहीतुं—आदातुं निरवशेषां—सम्पुर्णां, गण०भृतां बीजादिबुद्धित्वात्, ततः किं कुर्वन्ति ?, तीर्थंकरभाषितानि कुसुमकलपानि ग्रथ्नन्ति, विचित्रकुसुममालावत्, प्रवचनं—द्वादशाङ्गं तदर्थं कथमिदं भवेदित्यर्थः, प्रवचनं संघस्तदर्थां वा ॥९०॥ प्रयोजनान्तरमाह—

घित्तुं च सुहं सुहगणणधारणा दाउ पुच्छिउं चेव ।
एएहिं कारणेहिं जोयंति कयं गणहरेहिं ॥९१॥

इह मुत्कलं भगवता तीर्थकरेणोक्तं वचनवृन्दं मुत्कलकुसुमनिकुरम्बमिव सर्वात्मना ग्रहीतुं न शक्यते, ग्रथितं सद् ग्रहीतुं सुखं भवति, पदवाक्यप्रकरणाध्यायोद्देशाध्ययनप्राभृतवस्त्वादिनियतक्रमव्यवस्थापितं जिनवचनमिति विवक्षया, प्रवर्द्धमानेनोत्साहेन यत्नत एव ग्रहीतुं शक्यते, चः समुच्चये, तथा गुणनं—परावर्तनं गणनं वा, एतावदधीतमेतावच्चाध्येतव्यमिति. धारणा त्वविस्मृतिः, ते अपि ग्रथिते सति सुखं भवतः दातुं शिष्येभ्यः प्रष्टुञ्च संशयापनोदार्थं गुरुपादमूले, चः पूर्ववत्, एवकारस्य तु व्यवहित सम्बन्धः—ग्रहीतुं सुखमेव भवतीति, एतैरनन्तरोक्तकारणैर्हेतुभूतैः जीयन्ति—प्राकृतत्वाद्यथा जीवस्य जीवितं जीवन्मात्ररूपं न कदाचिद्व्यवच्छेदमुपयाति, तथा श्रुतमपि सदाऽवस्थानं स्यादित्येवमर्थं कृतं—ग्रथितं गणधरैः, अथवा जीत—आचरितं कल्पः सर्वेषां गणभृतां, इदं सन्दर्भणीयं तीर्थकरवचनमिति तैः कृतम् ॥९१॥ तथा चाह—

अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं ।
सासणस्स हियट्ठाए तओ सुत्तं पवत्तइ ॥९२॥

गाथा—९२

अर्थमात्रमेवार्हन् भाषते, सूत्रं प्रवर्तते, नन्वर्थोऽनभिलाप्यस्तस्याशब्दरूपत्वादतस्तं भगवान् कथं भाषते ?, उच्यते, शब्द एवार्थप्रत्यायनकार्यत्वादुपचारतोऽर्थः, यथाऽऽचारवचनत्वादाचार इत्यादि, ननु च शब्दमेवार्थप्रत्या-

यकमर्हन् भाषते नतु साक्षादर्थं, गणभृतोऽपि शब्दात्मकमेव ग्रथ्नन्ति, कोऽत्र विशेषः ?, उच्यते, स हि भगवान् विशिष्टमतिसम्पन्नगणधरापेक्षया प्रभूतार्थमर्थमात्र स्वल्पमेवाभिधत्ते, नत्वितरजनसाधारणग्रन्थराशिं, गणभृतस्तु न तथेति, तत्पुनः सूत्रम् ॥९२॥ किमादि ? किं पर्यन्तं ? किंयत्परिमाणं ?, को वाऽस्य सार इत्याह-

सामाइयमाईयं सुयनाणं जाव बिन्दुसाराओ ।
तस्सवि सारो चरणं सारो चरणस्स निव्वाणं॥९३॥

सामायिकमादौ यस्य तत्सामायिकादि यावद्बिन्दुसाराख्यचतुर्दशपूर्वपर्यन्तमित्यर्थः, यावच्छब्दात्तन्मूलभेदापेक्षया द्विभेद अङ्गप्रविष्टमनङ्गप्रविष्टञ्च, अङ्गप्रविष्ट द्वादशभेदामाचारादिभेदात्, अनङ्गप्रविष्टमनेकभेदं आवश्यकतद्व्यतिरिक्तकालिकोत्कालिकादिभेदात्, तस्यापि श्रुतस्य सारश्चरणं, सारोऽत्र प्रधानवचनः, ननु ज्ञानक्रियाभ्यां समुदिताभ्यां मोक्ष इति समानत्वमेवोभयोः, ततश्च कथं ज्ञानस्य सारश्चरणमिति ?, उच्यते, इह यद्यपि "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग" इति समानं ज्ञानचरणयोर्निर्वाणहेतुत्वमुपन्यस्तं, तथापि गुणप्रधानभावोऽस्ति, ज्ञानं प्रकाशकं, चरणं त्वभिनवकर्मादाननिरोधफल इति ज्ञानचरणरूपद्विकाभिवीनो मोक्षः, तथापि प्रकाशकतयैव व्याप्रियते ज्ञानं कर्ममलशोधकतया तु चरणमिति गुणप्रधानभावाच्चरणं ज्ञानस्य सारः, अपिशब्दात् सम्यक्त्वस्यापि सारश्चरणं, सम्यग्दर्शनादित्रयस्य समुदितस्यैव निर्वाणहेतुत्वात् ॥९३॥ तथा चाह निर्युक्तिकृत्—

सुअनाणंमिवि जीवो वट्टंतो सो न पाउणइ मोक्खं ।
जा तवसंजममइए जोए न चएइ वोढुं जे ॥९४॥

श्रुतज्ञाने अपिशब्दान्मत्यादिष्वपि ज्ञानेषु जीवो वर्तमानः सन् न प्राप्नोति मोक्षमित्येनेन प्रतिज्ञार्थः सूचितः, यस्तपःसंयममयान्–तपःसंयमात्मकान् योगान् न शक्नोति वोढुमित्यनेन हेत्वर्थः, जे इति पादपूरणे, दृष्टान्तश्चाभ्यूह्यो वक्ष्यति वा, प्रयोगश्च–न ज्ञानमेवेप्सितार्थप्रापक क्रियाविरहात्, स्वदेशप्राप्त्यभिलषितगमनक्रियाशून्यमार्गज्ञज्ञानवत्, सौत्रो वा दृष्टान्तः, मार्गज्ञनिर्यामकाधिष्ठितेप्सितदिक्सम्प्रापकपवनक्रियाशून्यपोतवत् ॥९४॥ तथा चाह—

जह छेयलद्धनिज्जामओवि वाणियगइच्छियं भूमिं ।
वाएण विणा पोओ ण चएइ महण्णवं तरिउं ॥९५॥

येन प्रकारेण छेको दक्षो लब्धः–प्राप्तो निर्यामको येन पोतेन सः, अपेः सुकर्णधाराधिष्ठितोऽपि, वणिज इष्टा वणिगिष्टा तां भूमिं महार्णवं तीर्त्वा वातेन विना न शक्नोति पोतो, प्राप्तुमिति वाक्यशेषः ॥९५॥ उपनयमाह—

तहनाणलद्धनिज्जामओवि सिद्धिवसहिं न पाउणइ ।
निउणोवि जीवपोओ तवसंजममारुअविहूणो ॥९६॥

तथा श्रुतज्ञानमेव लब्धो निर्यामको येन तथा, अपेः सुनिपुणमतिसुकर्णधाराद्यधिष्ठतोऽपि, संयमतपानियमरूपेण मारुतेन विहीनो निपुणोऽपि जीवपोतो भवार्णवं तीर्त्वा सन्मनोरथवणिजोऽभिप्रेतां सिद्धिवसतिं न प्राप्नोति तस्मात्तपः संयमानुष्ठानेऽप्रमादवता भाव्यम् ॥९६॥ तथा चौपदेशिकमेव गाथासूत्रमाह—

संसारसागरओ उब्बुड्डो मा पुणो निबुड्डिज्जा ।
चरणगुणविप्पहीणो बुड्डइ सुबहुंपि जाणंतो ॥९७॥

अस्याः पदार्थो दृष्टान्तेनोच्यते, यथा—कश्चित् कच्छपः प्रचुरतृणपत्रपटलनिबिडतमशैवलाच्छादितोदकान्धकारमहाह्रदान्तर्गतो विविधानेकजलचरक्षोभादिव्यसनव्यथितचेताः सर्वतो भ्रमन् कथमपि शैवालरन्ध्रमासाद्य शरदि पार्वणचन्द्रचन्द्रिकास्पर्शसुखमनुभूय भूयोऽपि स्वबन्धुस्नेहाकृष्टचेतोवृत्तिस्तेषामप्यदृष्टकल्याणानामहमिदं सुरलोककल्पं किमपि दर्शयामीति अवधार्य ह्रदमध्ये निमग्नः, ततः समासादितबन्धुवर्गस्तद्दर्शननिमित्तं विवक्षितरन्ध्रोपलब्ध्यर्थं पर्यटन् अपश्यंश्च कष्टतरं व्यसनमनुभवति स्म, एवमयमपि जीवकच्छपोऽनादिकर्मसन्तानपटलाच्छादितात्

मिथ्यादर्शनादितमोनुगताद् विविधशरीरमानसनेत्रकर्णवेदनाज्वरकुष्ठभगंदरेष्टवियोगानिष्टसंयोगादिदुःखजलचरानुगतात् संसार एव सागरस्तस्मात् क्वचिदेव मनुष्यभवप्राप्तियोग्यकर्मोदयलक्षणं रन्ध्रमासाद्य मनुष्यत्वप्राप्त्या उन्मग्नः सन् जिनचन्द्रवचनकिरणावबोधमासाद्य दुष्प्रापोऽयं जिनवचनबोधिलाभ इत्येवं जानानः स्वजनस्नेहविषयातुरचित्ततया मा पुनः कूर्मवत् तत्रैव निमज्जेत्, ननु अज्ञानी कूर्मो निमज्जत्येव, इत्तरस्तु हिताहितप्राप्तिपरिहारज्ञो ज्ञानी; ततः कथं निमज्जति ?, उच्यते—चरणगुणैर्विविधं प्रकर्षेण हीनः, ततः सुबह्वपि अपिशब्दादल्पमपि जानन्निमज्जति, यद्वा निश्चयनयेनाज्ञ एवासौ ज्ञानफलशून्यत्वात् ॥९७॥ प्रकृतमेवार्थं समर्थयन्नाह—

सुबहुंपि सुयमहीयं किं काहि ? चरणविप्पहीणस्स ।
अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥९८॥

सुबह्वपि श्रुतमधीतं किं करिष्यति चरणविप्रहीणस्य ?, न किञ्चित्करमेवेति भावः, तत्फलाभावात्, यथाऽन्धस्य प्रदीप्तानां दीपानां शतसहस्राणि—लक्षास्तेषां कोट्यपि, अपेर्द्व्यादिकोटयोऽपि ॥ ९८ ॥ व्यतिकरेमाह—

अप्पंपि सुयमहीयं पयासयं होइ चरणजुत्तस्स ।
इक्कोवि जह पईवो सचक्खुअस्सा पयासेइ ॥९९॥

अल्पमपि श्रुतमधीतं ,चरणयुक्तस्य—सावद्येतरयोगनिवृत्तिप्रवृत्तिपरिणामरूपचरणलक्षणचक्षुष्मतः प्रकाशकं भवति, एकोऽपि यथा प्रदीपः सचक्षुष्कस्य प्रकाशयति ॥९९॥ नन्वित्थं सति चरणरहितानां ज्ञानं सुगतिफलापेक्षया निर्थकं प्राप्नोति, उच्यते, इष्यत एव यत आह—

जहा खरो चंदणभारवाही, भारस्स भागी न हु चंदणस्स ।
एवं खु नाणी चरणेण हीणो, नाणस्स भागी न हु सोग्गईए ॥१००॥

यथा खरश्चन्दनभारवाही भारस्य भागी नतु चन्दनस्य, एवमेव ज्ञानी चरणेन हीनो ज्ञानस्य भागी नतु नैव सुगतेः ॥१०१॥

इदानीं विनेयस्य मा भूदेकान्तैव ज्ञानेऽनादरो, भविष्यति च क्रियायां, तच्छून्यायामपि पक्षपातः अतो द्वयोरपि केवलयोरिष्टफलासाधकत्वं दर्शयन्नाह—

हयं नाणं कियाहीणं, हया अन्नाणओ किया ।
पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥१०१॥

अत्र भावार्थः—पङ्ग्वन्धदृष्टान्ताज्ज्ञेयः—एकस्मिन्नगरे प्रदीपनके संवृत्ते पुरजने पलायमाने सति पङ्गुरनाथो गमनक्रियाऽभावाज्जानन्नपि पलायनमार्गं क्रमागतेनाग्निना दग्धो, अन्धोऽपि च गमनक्रियायुक्तः पलायन-

मार्गमजानन्नग्निभृतखान्यां पतित्वा दग्धः, एवं ज्ञान्यपि क्रियाहीनो न कर्माग्नेः पलायितुं समर्थः क्रियाविकलत्वात्, नापीतरो ज्ञानविकलत्वात्, अत्र प्रयोगो–ज्ञानमेव विशिष्टफलसाधकं न भवति, सत्क्रियायोगशून्यत्वात्, नगरदाहे पङ्गुलोचनविज्ञानवत् नापि क्रियैव विशिष्टफलप्रसाधिका, सज्ज्ञानरहितत्वात्, नगरदाह एवान्धस्य पलायनक्रियावत्, समुदिते पुनर्ज्ञानक्रिये फलायालम् ॥१०१॥ तथा चाह—

संजोगसिद्धीइ फलं वयंति, न हु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥१०२॥

ज्ञानक्रिययोः संयोगनिष्पतावेव मोक्षलक्षणं फलं वदन्ति अर्हन्तः, नहि लोकेऽप्येकचक्रेण रथः प्रवर्तते, एवमन्यदपि सामग्रीजन्यं कार्यं सर्वं ज्ञेयं, अत्र दृष्टान्तः–अन्धश्चपङ्गुश्च वने समेत्य–मीलित्वा तौ सम्प्रयुक्तौ नगरं प्रविष्टौ, समेत्येत्युक्तेऽपि तौ सम्प्रयुक्ताविति पुनरभिधानं आत्यन्तिकसंयोगप्रदर्शनार्थं, एवं ज्ञानक्रियाभ्यां सिद्धिपुरमवाप्यते, प्रयोगश्च–विशिष्टकारणसंयोगोऽभिलपितकार्यप्रसाधकः, सम्यक्क्रियोपलब्धिरूपत्वात्, अन्धपङ्गोरिव नगरावाप्तेः, यः पुनरभिलपितफलासाधको न स्यात् स सम्यक्क्रियोपलब्धिरूपोऽपि स्यात्, इष्टगमनक्रियाविकलविघटितैकचक्रथवदिति व्यतिरेकः, अत्र ज्ञातं–एकस्मिन्नरण्ये राजभये पुरादुद्वस्य[दुष्य]लोकस्तस्थौ, पुनरपि धाटिभयेन जने नष्टे वनदवे लग्ने अन्धः पङ्गुं स्कन्धे आरोप्य तद्वचसाऽग्न्यादि परिहरन् सुखेन प्राप पुरम्,

ननु ज्ञानक्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते ?, किमविशेषेण शिबिकोद्वाहकवत्, उत भिन्नस्वभावतया गमनक्रियायां नयनचरणादिव्रातवत् ? उच्यते, भिन्नस्वभावतया ॥१०२॥ यत आह—

णाणं पयासगं सोहओ तवो संजमो य गुत्तिकरो ।
तिण्हंपि समाजोगे मोक्खो जिणसासणे भणिओ ॥१०३॥

ज्ञानं प्रकाशकत्वेनोपकुरुते, तत्स्वभावत्वात्, गृहमलापनयने प्रदीपवत्, तपःसंयमौ क्रियाया एव भेदौ, तत्र तपः शोधकत्वेनोपकुरुते, तत्स्वभावत्वात्, गृहकचवरोज्झनक्रियया तच्छोधने कर्मकरपुरुषवत्, संयम—आश्रवद्वारविरमणरूपः, चशब्दः पृथग्ज्ञानादीनां प्रक्रान्तफलसिद्धौ भिन्नोपकारकर्तृत्वावधारणार्थः, गुप्तिकरः, आगन्तुककर्मकचवरनिरोधक इत्यर्थः, गृहशोधने पवनप्रेरितकचवरनिरोधेन वातायनादिस्थगनवत्, त्रयाणामेव, अपिरवधारणे, संभावने वा, किं संभावयति ? त्रयाणामपि निश्चयतः क्षायिकाणां, नतु क्षायोपशमिकानामपि, समायोगे—संयोगे सति मोक्षः—अशेषकर्मक्षयलक्षणः, ननु सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्यागमो विरुध्यते, सम्यग्दर्शनमन्तरेणोक्तलक्षणज्ञानादित्रयादेव मोक्षोक्तेः, उच्यते, तस्य ज्ञानरूपत्वाद्रुचिरूपत्वाज्ज्ञानान्तर्भावाददोषः ॥१०३॥

अथयत्प्रागुक्तं 'श्रुतज्ञानेऽपि जीवो वर्तमानः सन्न प्राप्नोति मोक्षमिति प्रतिज्ञासूत्रं', तत्रैव सूत्रसूचितः खल्वयं

हेतुर्ज्ञेयः–क्षायोपशमिकत्वादवधिज्ञानवत्, क्षायिकज्ञानाद्यवाप्तौ च मोक्षप्राप्तिरिति तत्त्वं, अतः श्रुतस्यैव क्षायोपशमिकत्वं दर्शयन्नाह–

भावे खओवसमिए दुवालसंगंपि होइ सुयनाणं ।
केवलियनाणलंभो नन्नत्थ खए कसायाणं ॥१०४॥

क्षायोपशमिके भावे द्वादशाङ्गं भवति श्रुतज्ञानं, अपेरङ्गबाह्यमपि, उपलक्षणं चैतत्, तेन मत्यादिज्ञानत्रयमपि सामायिकचतुष्टयमपि च, तथा केवलस्य भावः कैवलस्य–घातिकर्मवियोगस्तस्मिन् सति ज्ञानं कैवल्यज्ञानं तस्य लाभः कषायाणां–क्रोधादीनां क्षये सति, न अन्यत्रेति तृतीयार्थे सप्तमी अन्येन प्रकारेण, इह च छद्मस्थवीतरागावस्थायां कषायक्षये सत्यपि अक्षेपेण कैवल्यज्ञानाभावे ज्ञानावरणक्षयानन्तरं च भावेऽपि कषायक्षयग्रहणमत्र प्राधान्यख्यापनार्थं, कषायक्षय एव सति निर्वाणं भवति, तद्भावे त्रयाणामपि सम्यक्त्वादीनां क्षायिकत्वसिद्धेः, नन्वेवं तर्हि यदादावुक्तं 'श्रुतज्ञानेऽपि वर्तमानः सन् न प्राप्नोति मोक्षं, यस्तपःसंयमात्मकयोगशून्य' इति, तद्विशेषणमनर्थकं, श्रुते सति तपः संयमात्मकयोगमहिष्णोरपि मोक्षाभावात्, उच्यते, सत्यमेतत्, किन्तु क्षायोपशमिकसम्यक्त्वश्रुतचारित्राणामपि समुदिताना क्षायिकसम्यक्त्वादिनिबन्धनत्वेन पारम्पर्येण मोक्षहेतुत्वाददोषः, आह–इष्टमस्माभिर्मोक्षकारणकारणं श्रुतादि, तस्यैव कथं लाभोऽलाभो वा ?, ॥१०४॥ उच्यते–

अट्ठण्हं पयडीणं उक्कोसठिइइ वट्टमाणो उ ।
जीवो न लहइ सामाइयं चउण्हंपि एगयरं ॥१०५॥

अष्टानां ज्ञानावरणीयादिकर्मप्रकृतीनां उत्कृष्टस्थितौ वर्तमानो जीवो न लभते सामायिकं चतुर्णा–सम्यक्श्रुतदेशसर्वविरतिरूपाणामेकतरं–अन्यतमत्, अपेर्मतिज्ञानादि च, न केवलं न लभते, पूर्वप्रतिपन्नोऽप्यायुपूर्वर्ज-कर्मोत्कृष्टस्थितौ न स्यात्, यतोऽवाप्तसम्यक्त्वो हि तत्परित्यागेऽपि न भूयो ग्रन्थिमुल्लङ्घ्योत्कृष्टस्थितीः प्रकृतीर्वध्नाति, आयुपस्तूत्कृष्टस्थितौ वर्तमानोऽनुत्तरविमानवासिसुर उपपातकाले सम्यक्त्वश्रुतसामायिकयोः पूर्वप्रतिपन्नः, नतु प्रतिपद्यमानकः, तु शब्दादायुर्वर्जसप्तकर्मप्रकृतीनां जघन्यस्थितावपि वर्तमानः सूक्ष्मसम्परायादिः सम्यक्त्व-श्रुतसर्वविरतिसामायिकानां त्रयाणां पूर्वप्रतिपन्नो, नान्यः, आयुषि जघन्यस्थितौ तूभयाभावः, जघन्यायुष्कस्य क्षुल्लकभवग्रहणाधारत्वात्, तस्य च वनस्पतिषु भावात्, तत्र चोभयाभावात्, प्रकृतीनां चोत्कृष्टेतरभेदभिन्ना स्थितिरियं–ज्ञानदर्शनावरणीयवेदनीयानां स्थितिस्त्रिंशत्सागरोपमकोटीकोटयः उत्कृष्टा, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः, त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य, जघन्या तु द्वादशमुहूर्ता वेदनीयस्य, नामगोत्रयोरष्टौ, शेषाणामन्तर्मुहूर्तं, ननु किमेता युगपदेवोत्कृष्टां स्थितिमासादयन्ति उतैकस्यामुत्कृष्टस्थितिरूपायां संजातायामन्या अपि नियमतो भवन्ति आहोश्विदन्यथा वैचित्र्यं ?, उच्यते, मोहनीयस्योत्कृष्टस्थितौ शेषाणामपि षण्णामुत्कृष्टैव,

आयुष्कस्य तूत्कृष्टा वा मध्यमा वा, नतु जघन्या, मोहरहितानां तु शेषप्रकृतीनामन्यतमा या उत्कृष्टस्थितिः सद्भावे मोहस्य शेषाणां चोत्कृष्टा वा, मध्यमा वा, नतु जघन्या, इति प्रासङ्गिकम् ॥१०५॥ अथ लाभकारणमाह–

सत्तण्हं पयडीणं अब्भिंतरओ उ कोडिकोडीणं ।
काऊण सागराणं जइ लहइ चउण्हमण्णयरं ॥१०६॥

सप्तानां आयुर्वर्जकर्मप्रकृतीनां या पर्यन्तवर्त्तिनीस्थितिस्तामङ्गीकृत्य सागरोपमाणां कोटाकोटी तस्या अभ्यन्तर एव–मध्य एव, तुरेवकारार्थः, कृत्वा, आत्मानमिति गम्यते, यदि लभते चतुर्णां सामायिकानामन्यतरत्, तत एव नान्यथा इयमत्र भावना आयुर्वर्जसप्तकर्मप्रकृतीनां यदा पर्यन्तवर्त्तिनीस्थितिः पल्योपमासङ्ख्येयभागहीना सागरोपमकोटिप्रमाणाऽवतिष्ठते तदा घनरागद्वेषपरिणामरूपोऽत्यन्तदुर्भेददारुग्रन्थिवत्कग्रन्थिर्भवति, तस्मिंश्च कर्मग्रन्थावपूर्वकरणनामविशेषविशुद्धिकुठारधारया भिन्ने परमपदहेतोः सम्यक्त्वस्य लाभो जायते, नान्यथा, अथ सम्यक्त्वादिगुणावाप्तिविधिरुच्यते–जीवा द्विधा भव्या अभव्याश्च, तत्र भव्यानां करणत्रयं स्यात्, करणं नाम सम्यक्त्वाद्यनुगुणो विशुद्धः परिणामविशेषः, तथाहि–यथाप्रवृत्तकरणं अपूर्वकरणं अनिवृत्तिकरणं च, तत्र यथैव अनादिसंसिद्धेनैव प्रकारेण प्रवृत्तं यथाप्रवृत्तं, क्रियते कर्मक्षपणमनेनेति करणं, यथाप्रवृत्तं च तत्करणं चेति समासः, अनादिकालात्कर्मक्षपणाय प्रवृत्तो गिरिसरिदुपलघोलनान्यायेन कल्पोऽध्यवसायविशेषो यथाप्रवृत्तकरणं,

अप्राप्तपूर्वमपूर्वं तच्च तत्करणं चेति समासः, निवर्तनशीलं निवृत्ति न तथा अनिवृत्ति आ सम्यग्दर्शनलाभान्न निवर्तत इत्यर्थः, एतानि त्रीण्यपि यथोत्तरं विशुद्धविशुद्धतराणि, अभव्यानां त्वाद्यमेव, भव्यानामनादिकालादारभ्य यावद् ग्रन्थिस्थानं तावदाद्यं, ग्रन्थिं तु समतिक्रामतो द्वितीयं ग्रन्थेर्भेदकरणात् , सम्यग्दर्शनलाभाभिमुखस्यानिवृत्तिकरणं तृतीयम् ॥१०६॥

अथ करणत्रयमङ्गीकृत्य सामायिकलाभदृष्टान्तानभिधित्सुराह—

पल्लय १ गिरिसरिउवला २ पिवीलिया ३ पुरिस ४ पह ५ जरग्गहिया ६ ।
कुद्दव ७ जल ८ वत्थाणि ९ य सामाइयलाभदिट्ठंता ॥१०७॥

इह सामायिकलाभे नव दृष्टान्ताः—पल्लकः १ गिरिसरिदुपलः २ पिपीलिकाः ३ पुरुषः ४ पन्थः ५ ज्वरगृहीतः ६ कोद्रवः, जलं ८ वस्त्रं ९ दृष्टान्ताः। पल्लको—लाटदेशधान्यालयः, तत्र कश्चिन् महति पल्ये स्वल्पं स्वल्पतरं धान्यं प्रक्षिपति, प्रचुरं प्रचुरतरं तत आदत्ते, एवं ग्रहणनिक्षेपकरणे कालान्तरेण स रिक्तीस्यात् , एवं कर्मधान्यपल्ये जीवोऽनाभोगप्रवृत्तेन यथाप्रवृत्तकरणेन स्वल्पं स्वल्पतरमुपचिन्वन् प्रभूत प्रभूततरमपचिन्वंश्च गच्छता कालेन ग्रन्थिमासादयति, पुनस्तं भिन्दानस्यापूर्वकरणं, सम्यग्दर्शनलाभाभिमुखस्यानिवृत्तिति, ननु दृष्टान्त एवाय-

मनुपपन्नः, यत आगमः—"पल्ले महइमहल्ले कुंभं पक्खिवइ सोहई नालिं। असंजए अविरए बहु बंधइ निज्जरे थोव ॥१॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे नालिं। जे संजए पमत्ते बहु निज्जरइ बन्धए थोवं ॥२॥ पल्ले महइ-महल्ले कुंभं सोहेइ पक्खिवे न किंचि। जे संजएऽपमत्ते बहु निज्जरं बन्धइ न किंचि ॥३॥" [आ. ३५-३६-३७] ततः पूर्वमसंयतस्य मिथ्यादृष्टेर्बहुतरबन्धकस्य कुतो ग्रन्थिदेशावाप्तिः? उच्यते ।

ननु बाहुल्यमङ्गीकृत्येदमुक्तं, अन्यथा सदा बहुबन्धाङ्गीकारेऽनपचयने च नो शेषकर्मपुद्गलानामेव ग्रहणं प्राप्नोति, अनिष्टं चैतत्, सम्यग्दर्शनादिप्राप्तिश्चानुभवसिद्धा विरुध्यते, तस्मात् प्रायोवृत्तिगोचरमिद पल्लेत्यादि १, कथमनाभोगतः प्रचुरतर-कर्म क्षयः? इत्याह—गिरेः सरिद्गिरिसरित्तस्यामुपलाः पाषाणास्तद्वत्, कोऽर्थः? यथा गिरिसरिदुपला अन्योऽन्यघ-र्षणोपयोगशून्या अपि विचित्राकृतयः स्युस्तथा जीवा मिथ्यात्वाणुप्रघर्षणाद्विचित्रकर्मस्थितिका विचित्राः, यथाप्रवृ-त्तकरणतो ग्रन्थिदेशं प्राप्तास्तमतिक्रम्य २ च सम्यक्त्व लभन्ते २. पिपीलिकानां यथा भुवि स्वभावगमनं स्यात्, तथा स्थाण्वारोहण संजातपक्षाणां च तस्मादप्युत्पतन स्थाणुमूर्द्धनि वाऽवस्थानं कासाञ्चित् स्थाणुशिरसः प्रत्यव-सर्पण, एवमिह जीवाना कीटिकास्वभावगमनवद्यथाप्रवृत्तकरणं, स्थाण्वारोहणकल्पं, त्वपूर्वं, उत्पतनतुल्यमनिवृत्तिः स्थाणुपर्यन्तावस्थानसदृश तु ग्रन्थ्यवस्थानं, तच्छिरःप्रत्यवसर्पणसम पुनः कर्मस्थितिवर्द्धन ३, केचन त्रयः पुरुषा महाटवीं प्रपन्नाः, सुदीर्घमध्वानमतिक्रामन्तः पुरस्तादुभयतः समुत्खातकरवालपाणी द्वौ तस्करावालोक्य तेषामेकः

प्रतीपमनुप्रयातः, अपरस्तु ताभ्यामेव गृहीतः, अन्यस्तु तौ द्वावप्यतिक्रम्येष्टं नगरं प्राप्तः, अयमुपनयः इह स साराटव्यां पुरुषास्त्रयः संसारिणः कलप्यन्ते,पन्थाः, कर्मस्थितिरतिदीर्घा, भयस्थानं ग्रन्थिदेशः, द्वौ तस्करौ रागद्वेषौ, तत्र प्रतीपगामी यो यथाप्रवृत्तकरणेन ग्रन्थिदेशमासाद्य पुनरनिष्टपरिणामः सन्नुत्कृष्टां कर्मस्थितिमासादयति, तस्करद्वयावरुद्धस्तु प्रबलरागद्वेषोदयो ग्रन्थिकसत्वः, अभिलषितनगरानुप्राप्तस्तु अपूर्वकरणतो रागद्वेषचौरावपाकृत्यानिवृत्तिकरणेनावाप्त सम्यक्त्व इति ४, आह— स हि सम्यग्दर्शनमुपदेशतो लभतेऽनुपदेशतो वा ?, उच्यते, उभयथा, यथा कश्चिन्नरः पथभ्रष्टः परिभ्रमन् स्वयं पन्थानमासादयति, कश्चित्तु परोपदेशेन, अपरस्तु नासादयत्येव, एवमिहाप्यत्यन्तप्रणष्टसत्पथजीवो यथाप्रवृत्तात् संसाराटव्यां भ्रमन् कश्चिद् ग्रन्थिमासाद्यापूर्वेण तमतिक्रम्यानिवृत्तिकरणमनुप्राप्य स्वयमेव सम्यग्दर्शनादिरूपं निर्वाणपन्थानं लभते, कश्चित्परोपदेशात्, प्रतीपगामी ग्रन्थिकसत्त्वो वा नैव लभते ५। ज्वरः कश्चित्स्वयमेवापैति, कश्चिद्भेषजोपयोगेन, कश्चिन्नैव, एवं मिथ्यादर्शनमहाज्वरोऽपि कश्चित् स्वयमेवापैति, कश्चिदर्हद्वचनभेषजोपयोगात्, अन्यस्तु तदौषधोपयोगेऽपि नापैति, करणत्रययोजना स्वयं कार्या ६, केषाञ्चित् कोद्रवाणां मदनभावः स्वयमेव कालान्तरतोऽपैति, केषाञ्चिद् गोमयादिपरिकर्मतः, अन्येषां तथापरिकर्म्मणायामपि नापैति, एवं मिथ्यादर्शनभावोऽपि केषाञ्चित् स्वयमेवापैति, अन्येषामुपदेशकर्मतः, अन्येषां नैव, इह च भावार्थः— स हि जीवोऽपूर्वकरणेन मदनार्द्धशुद्धशुद्धकोद्रवानिव दर्शनं मिथ्यात्वमिश्रसम्यक्त्वभेदेन त्रिधा विभज्य ततोऽनिवृत्तिकरणविशेषात् सम्यक्त्वं प्राप्नोति, एवं करणत्रययोगवता

भव्यस्य सम्यग्दर्शनप्राप्तिः, अभव्यस्यापि कस्यचिद्यथाप्रवृत्तकरणतो ग्रन्थिमासाद्यार्हदादिविभूतिदर्शनतः प्रयोजनान्तरतो वा प्रवर्तमानस्य श्रुतसामायिकलाभो, नाशेपलाभः ७। जलं—यथा जलं मलिनार्द्धविशुद्धशुद्धभेदेन त्रिधा स्यात् एवं दर्शनमपि मिथ्यादर्शनादिभेदेनापूर्वकरणतस्त्रिधा करोति, भावना प्राग्वत् ८ । एवं वस्त्रदृष्टान्तेऽपि भावना कार्या ९ ॥१०७॥

अथ प्रासङ्गिकमुच्यते, एवं सम्यग्दर्शनलाभोत्तरकालं अवशेषकर्मणः पल्योपमपृथक्त्वस्थितिक्षयोत्तरकालं देशविरतिरवाप्यते, पुनः सङ्ख्येयेषु सागरोपमेषु चारित्रमुपशमश्रेणिः क्षपकश्रेणिश्च, इय च देशविरत्यादिप्राप्तिरेतावत्कालतो देवमनुष्येषूत्पद्यमानस्याप्रतिपतितस्योत्कर्षतो द्रष्टव्या, अन्यथा अन्यतरश्रेणिरहितसम्यक्त्वादिगुणप्राप्तिरेकभवेनाप्यविरुद्धा, उक्तश्च भाष्यकृता—"सम्मत्तंमि उ लद्धे पलियपुहुत्तेण सावओ हुज्जा । चरणोवसमखयाण सागरसंखंतरा हुंति ॥१॥ एवं अप्पडिवडिए संमत्ते देवमणुअजम्मेसु । अन्नयरसेढिवज्ज एगभवेण च सव्वाइं ॥२॥" उक्तमानुषङ्गिकम् ।



अथ यदुदयात्सम्यक्त्वसामायिकादिलाभो न स्यात् सञ्जातो वाऽपैति, तानिहावरणभूतान् कषायानाह—

पढमिल्लुयाण उदए नियमा संजोयणाकसायाणं ।
सम्मद्दंसणलंभं भवसिद्धीयावि न लहंति ॥१०८॥

प्रथमा एव प्रथमेल्लुकाः, देशीवचनमेतत्, अनन्तानुबन्धिनस्तेषां, प्राथम्यं चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात् क्षपणक्रमाद्वा, उदयः उदीरणावलिकाप्रविष्टानां तत्पुद्गलानामुद्भूतसामार्थ्यता तस्मिन्नुदये नियमादित्यस्य व्यवहितः सम्बन्धः, किंविशिष्टानां ? कर्मणा सह संयोजयन्ति जीवमिति संयोजनास्ते च ते कषायाश्च संयोजनाकषाया स्तेषां, नियमेन सम्यग्दर्शनलाभं, भवे सिद्धिर्येषां ते भवसिद्धिकाः, ननु सर्वेषामेव भवे सिद्धिः स्यात्, ततः किं भवग्रहणेन ?, सत्यमेतत्, केवलं भवग्रहणादिह तद्भवो गृह्यते, तद्भवसिद्धिका अपि न लभन्ते, किं पुनः परीत-संसारिणोऽभव्या वा ? ॥१०८॥

अथ देशविरत्यावरणभूतान् तानाह—

बिइयकसायाणुदए अपच्चक्खाणनामधेज्जाणं ।
सम्मद्दंसणलंभं विरयाविरइं न उ लहंति ॥१०९॥

द्वितीयकषायाणां, द्वितीयता च देशविरतिलक्षणद्वितीयगुणघातित्वात् क्षपणक्रमाद्वा, न विद्यते देशतः

सर्वतो वा प्रत्याख्यानं येषु उदयं प्राप्तेषु तेऽप्रत्याख्यानाः, सर्वनिषेधवाची नञ्, त एव नामधेयं येषां ते प्रत्याख्याननामधेयास्तेषां उदये सम्यग्दर्शनलाभं भव्याः लभन्ते इति वाक्यशेषः, अयं च वाक्यशेषस्तुशब्द-सूचितो ज्ञेयः, विरताविरति–देशविरतिमित्यर्थः न तु लभन्ते, तुशब्दात् सम्यग्दर्शनं लभन्त इत्युक्तमेव ॥१०९॥

तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं ।
देसिक्कदेसविरइं चरित्तलंभं न उ लहंति ॥११०॥

सर्वविरतिलक्षणतृतीयगुणघातित्वात् क्षपणक्रमाद्वा तृतीयकषायाणामुदये प्रत्याख्यानं सर्वविरतिलक्षणं तस्यावरणाः प्रत्याख्यानावरणास्ते एव नामधेयं येषां ते तथा तेषां, ननु प्रत्याख्याननामधेयानामुदये न प्रत्याख्यानमस्तीयुक्तं, नञ् प्रतिषिद्धत्वात्, इहापि चावरणशब्देन प्रत्याख्याननिषेधात्, क एषां विशेषः ?, उच्यते, तत्र नञ् सर्वनिषेधे, इह त्वाङ्मर्यादेपदर्थवचनत्वात् मर्यादया आवृण्वत्यावरणाः, ततः सर्वविरतिनिषेधार्थ एव आवरणशब्दो, न देशविरतिनिषेधे, तथा चाह–देशश्चैकदेशश्च देशैकदेशौ, देशः स्थूलप्राणातिपात, एकदेशः–तस्यैव देशो वनस्पतिकायातिपातः, तयोर्विरतिस्तां, लभते इति वाक्यशेषः, अत्रापि वाक्यशेषस्तुशब्दाक्षिप्तो ज्ञेयः, चारित्रस्य-सर्वविरतिरूपस्य लाभं न लभन्ते ॥११०॥ अमुमेवार्थं सङ्गृह्य विभणिषुश्चतुर्थकषायानाह–

मूलगुणाणं लंभं न लहइ मूलगुणघाइणं उदए ।
उदए संजलणाणं न लहइ चरणं अहक्खायं ॥१११॥

सम्यक्त्वं महाव्रतान्यणुव्रतानि च मूलभूता गुणाः उत्तरगुणाधारा इत्यर्थः तेषां लाभं न लभते, मूलगुणान् घातयितुं शीलं येषां ते तथा तेषां मूलगुणघातिनां अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणानां द्वादशकषायाणामुदये,-सञ्ज्वलनानामुदये न लभते चरणं यथाख्यातं, यथैव तीर्थंकरगणधरैराख्यातं यथाख्यातमकषायमित्यर्थः, सकषायं तु लभते ॥१११॥ न च यथाख्यातचारित्रमात्रोपघातिन एव सञ्ज्वलनाः किन्तु शेषचारित्रदेशोपघातिनोऽपि, तदुदये शेषचारित्रस्यापि देशतोऽतिचारसम्भवात्, तथा चाह–

सव्वेविअ अइयारो संजलणाणं तु उदयओ हुंति ।
मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं ॥११२॥

सर्वे आलोचनादिच्छेदपर्यन्तसप्तविधप्रायश्चित्तशोध्याः, अपेः कियन्तोऽपि वा अतिचाराः चारित्रस्खलनाविशेषाः सञ्ज्वलनानामेवोदयतो भवन्ति, तुरेवार्थः, द्वादशानां पुनः कषायाणामुदयतो मूलच्छेद्यं भवति–मूलेनाष्टमस्थानवर्त्तिना प्रायश्चित्तेन छिद्यते अपनीयते यद्दोषजालं तन्मूलच्छेद्यं, अशेषचारित्रोच्छेदकारीति भावना ॥११२॥ यत एवं ततः प्राह–

बारसविहे कसाए खइए उवसामिए व जोगेहिं ।
लब्भइ चरित्तलंभो तस्स विसेसा इमे पंच ॥११३॥

द्वादशविधेऽनन्तानुबन्ध्यादौ कषाये क्षपिते विध्यातताग्नितुल्यतां नीते उपशमिते भस्मच्छन्नाग्निकल्पता प्रापिते, वा शब्देन क्षयोपशमं वाऽर्द्धविध्याते ज्वलनममतामुपनीते योगैः—मनोवाक्कायलक्षणैः प्रशस्तैर्हेतुभूतैः लभ्यते चारित्रलाभः, तस्य चारित्रस्य विशेषा—भेदा इमे वक्ष्यमाणाः पञ्च ॥११४॥ तान् गाथाद्वयेनाह—

सामाइयं च पढमं छेओवट्ठाणं भवे वीयं ।
परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥११४॥

समाना—ज्ञानदर्शनचारित्राणा आयः समायस्तेन निर्वृत्तं तत्र भव वा सामायिक—सर्वसावद्ययोगविरतिरूपं ततश्च सर्वमप्येतच्चारित्रमविशेषतः सामायिकं, तथापि छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्व भजते, तत्र प्रथमं विशेषणाभावात् सामान्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्र स्वल्पकालमित्वरं, तच्च भरतैरावतेषु प्रथमपश्चिमतीर्थंकरतीर्थेपु अनारोपितमहाव्रतस्य शैक्षस्य ज्ञेयं, यावत्कथिकं प्रव्रज्याप्रतिपत्तिकालादारभ्याप्राणोपरमादित्यर्थः, तच्च भरतैरावतभाविमध्यमद्वाविंशतितीर्थंकरतीर्थेपु महाविदेह-

तीर्थकरतीर्थेषु च साधूनां ज्ञेयं, तेषामुपस्थापनाया अभावात् , नन्वाद्यन्त्यजिनसाधूनामपि यदित्वरं सामायिकं तत्रापि 'करोमि भदन्त सामायिकं यावज्जीव' मितीत्वरस्याप्याभवग्रहणात् तस्य चोपस्थापनायां त्यागात् कथं न प्रतिज्ञालोपः?, उच्यते, अतिचाराभावात्तस्यैव सामान्यतः, सावद्ययोगनिवृत्तिरूपेणावस्थितस्य शुद्ध्यन्तरापादनेन सञ्ज्ञामात्रविशेषात्, चशब्दो वाक्यालङ्कारे, छेदोपस्थापनं भवेत् द्वितीयं, तत्र छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिन् चारित्रे तत् छेदोपस्थपनं, तच्च द्विधा—सातिचारं निरतिचारं च, तत्र निरतिचारं यत् इत्वरसामायिकवतः शैक्षस्यारोप्यते तीर्थान्तरसङ्क्रान्तौ वा, यथा, श्रीपार्श्वतीर्थाद्वर्द्धमानतीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्तौ, सातिचारं तु यन्मूलगुणघातिनः पुनर्व्रतोच्चारणं, उभयमपि चाद्यान्त्यजिनतीर्थे (ऋजुप्राज्ञानां तदतिचाररहितत्वात् , यद्वा तथाभावेऽपि सामायिकस्य पुनर्ग्रहो नतु व्रतानां) परिहरणं परिहारः तपोविशेषस्तेन विशुद्धिर्यस्मिन् चारित्रे तत्परिहारविशुद्धिकं, तच्च द्विधा, निर्विशमानकं निर्विष्टकायकं च, तत्र निर्विशमानका विवक्षितचारित्रसेवकाः, तदव्यतिरेकाच्चारित्रमपि निर्विशमानकं, एवमग्रेऽपि, आसेवितविवक्षितचारित्रकायास्तु निर्विष्टकायकाः, इह नवको गणः चत्वारः परिहारकाः चत्वारस्तद्वैयावृत्त्यकरा अनुपरिहारकाः, एको गुरुभूतो वाचनाचार्य, तपश्च पारिहारिकाणां ग्रीष्मे जघन्यं चतुर्थं मध्यमं षष्ठं उत्कृष्टमष्टमं, शिशिरे जघन्यमध्यमोत्कृष्टपदैः षष्ठमष्टमं दशमं, वर्षासु चाष्टमं दशमं द्वादशं च, पारणके आचाम्लं, भिक्षे चाद्ये द्वे न ग्राह्ये, पञ्च ग्राह्याः, वाचनाचार्या अनुपहारिकाश्च प्रतिदिनमाचाम्लं कुर्वन्ति, एवं षण्मासान् यावत् , ततो वैपरीत्येन षण्मासान् यावत् अनुपहारकाः, परिहारिकतां च

प्रतिपद्यन्ते, उत्तरे तु परिहारिकतां, ततोऽपि षण्मासान् यावत् वाचनाचार्यं पारिहारिक एको वाचक सप्तानु-पारिहारिका, एवमष्टादश मासाः, ततो जिनकल्पं गच्छं वा प्रतिपद्यन्ते, एषां यच्चरणं तत् परिहारविशुद्धिकं. एते च परिहारविशुद्धिक, एते च परिहारविशुद्धिका द्विधा—इत्वरा यावत्कथिकाश्च. तत्र ये कल्पसमाप्त्यनन्तर-मेव स्थविरकल्पं गच्छं वा समुपयास्यन्ति ते इत्वरा, ये तु कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्प प्रतिपत्स्यन्ते ते यावत्कथिका, अत्र स्थविरकल्पग्रहणमुपलक्षण स्वकल्प चेति द्रष्टव्यं, तत्र इत्वराणां कल्पप्रभावादेव देवमनुष्य तिर्यग्योनिककृता उपसर्गाः सद्योघातिन आन्तका अतीवाविपह्याश्च तीव्रवेदना न प्रादुष्पन्ति, यावत्कथिकानां पुनः सम्भवेयुरपि, ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः सम्भवन्ति, तथेत्यानन्तर्ये, गाथाभङ्गभयाद् व्यवहितोपन्यास, सूक्ष्ममित्यनुस्वारोऽलाक्षणिकः, सम्पर्येति संसार-मनेनेति सम्पराय—कषायोदय, सूक्ष्मो लोभांशमात्रशेषत्वात्सम्परायो यत्र तत्सूक्ष्मसम्पराय, तच्च द्विधा विशुद्ध्य-मानकं सङ्क्लिश्यमानकं च, तत्राद्यं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहत, इतरत्तु उपशमश्रेणितः प्रच्यवमानस्य, चः समुच्चये ॥११४॥

तत्तो य अहक्खायं खायं सव्वंमि जीवलोगंमि ।
जं चरिऊण सुविहिआ वच्चंतयरामरं ठाणं ॥११५॥

ततश्च सूक्ष्मसम्परायानन्तरं अथाख्यातं, अथशब्दो यथार्थे, आङ् अभिविधौ, याथातथ्येन अभिविधिना च यदाख्यातं कथितं अकषायं चारित्रमिति तदथाख्यातं, यथाख्यातमिति, यथा सर्वस्मिन् जीवलोके ख्यातं—प्रसिद्धमकषायं भवति चारित्रमिति, यच्चरित्वा—आसेव्य: शोभनं विहितं अनुष्ठानं येषां ते सुविहिता सुसाधवः व्रजन्ति, न विद्यन्ते जरा यत्र तदजरं न म्रियते प्राणी यत्र तदमरं, अजरं चामरं चाजरामरं, मोक्षपदमित्यर्थः, इदं चारित्रं द्विधा—छाद्मस्थिकं कैवलिकं च, आद्यमुपशान्तमोहगुणस्थाने क्षीणमोहगुणस्थाने च, कैवलिकं तु सयोग्ययोगिकेवलिभवं, तत्र एतेषां पञ्चानां चारित्राणामाद्यत्रयं क्षयोपशमलभ्यं, अन्त्यद्वयं तूपशमक्षयलभ्यमेव ॥११५॥ अत कर्मोपशमक्रममाह—

अण—दंस—नपुंसि—त्थीवेय—छक्कं च पुरुसवेयं च ।
दो दो एगंतरिए सरिसे सरिसं उवसमेइ ॥११६॥

इह उपशमश्रेणिप्रारम्भकोऽप्रमत्तसंयत एव भवति, अन्ये त्वविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतम इति वदन्ति, श्रेणिसमाप्तौ चाप्रमत्तः प्रमत्तो वा स्यात्, स चैवमारभते—अणत्ति—अनन्तानुबन्धिनः समुदायशब्दानामवयवे वृत्तिदर्शनात्, तत्रादौ युगपदन्तर्मुहूर्त्तमात्रकालेनानन्तानुबन्धिन उपशमयति, एवं सर्वत्र युगपदुपशमकालाऽन्तर्मुहूर्तमान एव ज्ञेयं, ततो दर्शनं—मिथ्यात्वमिश्रसम्यक्त्वरूपं त्रिविधं युगपदेव, यदि पुरुषः प्रारम्भकस्ततो नपुंसक-

वेदमनुदीर्णमपि, ततोऽनुक्रमेण स्त्रीवेदं, षट्कमिति हास्यरत्यरतिशोकभयजुगुप्सारूपं, पुरुषवेदं, अथ स्त्री प्रारम्भिका ततः आदौ नपुंसकवेदं पुरुषवेद षट्कं स्त्रीवेदं, अथ नपुंसकः प्रारम्भकः ततोऽसावनुदीर्णमप्यादौ स्त्रीवेदं पुरुषवेदं हास्यादिषट्कं नपुंसकवेदं, ततो द्वौ द्वौ क्रोधाद्यौ एकान्तरितौ—सञ्ज्वलनविशेषक्रोधाद्यन्तरितौ सदृशौ—क्रोधादितया, परस्पर तुल्यौ, सदृशं—युगपदेवान्तर्मुहूर्त्तेन, तथाहि—अप्रत्याख्यानप्रत्याख्यानावरणौ क्रोधौ क्रोधत्वेन सदृशौ युगपदन्तर्मुहूर्तेनोपशमयति, ततः सञ्ज्वलनक्रोधमेकाकिनमेव, तत एवमेवाप्रत्याख्यानप्रत्याख्यानावरणौ मानौ, सञ्ज्वलनमानं, अप्रत्याख्योनप्रत्याख्यानावरणे माये, सञ्ज्वलनमायामेकाकिनीं, अप्रत्याख्यानप्रत्याख्यानावरणलोभौ, सञ्ज्वलनलोभं, तं चोपशमयन् त्रिधा करोति, तत्र द्वौ भागौ युगपदुपशमयति, तृतीयभागं तु सख्येयानि खण्डानि करोति, तान्यपि पृथक्पृथक्कालभेदेनोपशमयति, पुनः संख्येयखण्डानां च चरमखंडं असंख्येयानि खण्डानि करोति यदा तदा सूक्ष्मसम्परायः ततः समये समये एकैकं खण्डमुपशमयति, इह दर्शनसप्तके उपशान्तेऽपूर्वकरणोऽनिवर्त्तिबादरो वा उच्यते, तत ऊर्ध्वमनिवर्त्तिबादरो यावत् संख्येयान्तिमद्विचरमखण्डं, ननु संज्वलनादीनां युक्तं इत्थमुपन्यासः, अनन्तानुबन्धिनां तु दर्शनप्रतिपत्तावेवोपशमितत्वात् न युज्यते, उच्यते, दर्शनप्रतिपत्तौ तेषां क्षयोपशमात्, इह चोपशमादविरोधः, (क्षायोपशामकमाश्रित्य प्राक्तनौपशमिकेऽन्तरकृत उदयाभावौ, न यत्नकृतः, न हि मिथ्यादृगिदमारभते अवाप्तिरपि तत्राप्रमत्तान्ता), ननु क्षयोपशमोपशमयोः कः प्रतिविशेषः ?, उच्यते, क्षयोपशमो ह्युदीर्णस्य क्षयोऽनुदीर्णस्य च विपाकानुभवापेक्षयोपशमः, प्रदेशानुभवतस्तूदयोऽस्त्येव, उपशमे तु प्रदेशा-

नुभवोऽपि नास्ति, उक्तञ्च भाष्यकृता—"वेएइ संतकम्मं खओसमिएसु नाणुभावं सो उवसंतकसाओ उण वेएइ न संतकम्मंपि ॥१॥ (वि० १२८३)

ननु संयतस्यानन्तानुबन्धिनामुदयो निषिद्ध एव तत्कथमुपशमः ?, उच्यते, ह्यनुभवकर्माङ्गीकृत्य, नतु प्रदेशकर्म, तथा चोक्तमार्षे—"जीवा णं भंते ! सयंकडं कम्मं वेएइ ?, गोयमा ? अत्थेगइअं वेएइ, अत्थेगइअं नो वेएइ, से केणट्ठेणं पुच्छा, गोयमा दुविहे कम्मे पन्नत्ते, तंजहा—पएसकम्मे अणुभावकम्मे, तत्थ जं पएसकम्मं तं निअमा वेएइ, तत्थ णं जं तं अणुभावकम्म तं अत्थेगइअं वेएइ, अत्थेगइअं नो वेएइ" इत्यादि, ततश्च प्रदेशकर्मानुभवोदयस्येहोपशमो दृश्यः, आह—यद्येवं तर्हि संयतस्यानन्तानुबन्ध्युदयतः कथं दर्शनविघातो न स्यात् ? उच्यते, प्रदेशकर्मणो मन्दानुभावात्, तथा कस्यचिदनुभवकर्मानुभावोऽपि नात्यन्तमपकाराय भवॅल्लभ्यते, यथा सम्पूर्णमत्यादिचतुर्ज्ञानिनस्तदावरणोदये इति, स्थापना, इह च संख्येयानि लोभखण्डान्युपशमयन् बादरसम्पराय उच्यते चरमस्य तु संख्येयखण्डस्यासंख्येयानि खण्डानि प्रतिसमयमेकैकखण्डमुपशमयन् सूक्ष्मसम्परायः ॥११६॥ तथा चाह—

लोभाणुं वेअंतो जो खलु उवसामओ व खवगो वा ।
सो सुहुमसंपराओ अहखाया ऊणओ किंची ॥११७॥

मञ्ज्वलनलोभस्याणून् संख्येयतमस्य खण्डस्यासंख्येयानि प्रतिसमयमेकैकं खण्डं वेदयन् य उपशामकः क्षपको वा स्यात् सोऽन्तर्मुहूर्तकालं सूक्ष्मसम्परायो भण्यते, अय च यथाख्यातात्किञ्चिदूनः, किमुक्तं भवति ? सूक्ष्मसम्परायावस्थामन्तर्मुहूर्तमात्रकालमानमनुभूय उपशामकनिर्ग्रन्थो यथाख्यातचारित्री स्यात्, इह यदि बद्धायुरुपशमश्रेणिं प्रतिपन्नः श्रेणिमध्यगतगुणस्थानवर्त्ती उपशान्तमोहो वा भूत्वा कालं करोति तदा नियमेनानुत्तरसुरेषू पद्यते, श्रेणिप्रतिपतितस्य तु कालकरणेऽनियमः, नानामतित्वेन नानास्थानगमनात्, अथाबद्धायुस्तर्हि अन्तर्मुहूर्त्तमुपशान्तमोहो भूत्वा नियमतः पुनरप्युदितकपायः कात्स्र्न्येन श्रेणिप्रतिलोमम वर्तते ॥११७॥ तथा चैतदेव दुरन्तकपायसामर्थ्यमुत्कीर्तयन्नाह—

उवसामं उवणीआ गुणमहया जिणचरित्तसरिसंपि ।
पडिवायंति कसाया किं पुण से से सरागत्थे ? ॥११८॥

उपशमं अपेः क्षयोपशममपि उपनीताः गुणैर्महान् गुणमहान् तेन गुणमहत्ता उपशमकेन प्रतिपातयन्ति कपायाः संयमात् संसारे वा, कं ? तमेवोपशामकं; किंविशिष्टं ? जिनचारित्रेण सदृशमपि द्वयोरपि कपायोदयरहितचारित्रयुक्तत्वात्, किं पुनः शेषान् सरागस्थान् ?, सुतरां प्रतिपातयन्ति, यथा भस्मछन्नानलः पवनाद्यासादितसहकारिकारणान्तरः पुनः स्वरूपमुपदर्शयति एवमसावप्युदितकपायानलो जघन्यतस्तद्भवे एव मुक्तिं न लभते, उत्कृष्टतस्तु

देशोनमर्द्धं पुद्गलपरावर्त्तमपि संसारमनुबध्नाति ॥११८॥ यत एवं तीर्थकरोपदेशोऽत औपदेशिक गाथा-द्वयमाह—

जइ उवसंतकसाओ लहइ अणंतं पुणोऽवि पडिवायं ।
ण हु भे वीससियव्वं थेवे य कसायसेसंमि ॥११९॥
अणथोवं वणथोवं अग्गीथोवं कसायथोवं च ।
ण हु भे वीससियव्वं थेवंपि हु तं बहुं होइ ॥१२०॥

यद्युपशान्तकषायो लभतेऽनन्ततं भूयोऽपि प्रतिपातं ततः स्तोकेऽपि कषायशेषे नहु—नैव भे—भवद्भिर्विश्वसितव्यम् ॥११९॥ अमुमेवमर्थं सदृष्टान्तमाह—

ऋणस्य स्तोकं ऋणस्तोकं एवं व्रणादिस्तोकं च दृष्ट्वा नहु—नैव भे—भवद्भिर्विश्वसितव्यं, यतः स्तोकमपि तद्व्रणादि बहु भवति, उक्तञ्च भाष्यकृता—"दासत्तं देइ अणं अचिरा मरणं वणो विसप्पंतो, सव्वस दाहमग्गी देंति कसाया भवमणंतं ॥१॥ (वि. १३११)" ॥१२०॥ उक्तमौपशमिकचारित्रमिदानीं क्षायिकमाह—

अण–मिच्छ–मीस–सम्मं. अट्ठ नपुंसित्थीवेय–छक्कं च ।
पुंवेयं च खवेइ कोहाइए य संजलणे ॥१२१॥

इह क्षपकश्रेणिप्रतिपत्ताऽसंयतादीनामन्यतमोऽत्यन्तविशुद्धपरिणामः स्यात्, स चोत्तमसंहननः, तत्र पूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि प्रतिपद्यते, अपरे धर्मध्यानोपगता एव, क्रमश्चायम्–प्रथममनन्तानुबन्धिनश्चतुरोऽपि क्रोधादीन् अन्तर्मुहूर्त्तेन युगपत् क्षपयति, तदनन्तभागं तु मिथ्यात्वे प्रक्षिप्य ततो मिथ्यात्वं, सहैव तदंशेन युगपत् क्षपयति, यथाहि–अतिसम्भृतो दवानलः खल्वर्द्धदग्धेन्धन एवेन्धनान्तरमासाद्य उभयमपि दहति एवमसावपि क्षपकस्तीव्रशुभपरिणामत्वादशेषमन्यत्र प्रक्षिप्य क्षपयति, तदनन्तरं तथैव मिश्रं, ततः सम्यक्त्वं, इह यदि बद्धायुः क्षपकश्रेणिमारभते अनन्तानुबन्धिक्षयानन्तरं च मरणसम्भवतो व्युपरमते, ततः कदाचिन्मिथ्यादर्शनोदयाद्भूयोऽप्यनन्तानुबन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्य सद्भावात्, क्षीणमिथ्यादर्शनस्तु न उपचिनोति, मूलाभावात् तदवस्थश्च मृतोऽवश्यं त्रिदशेषूत्पद्यते, क्षीणसप्तकोऽप्रतिपतितपरिणामस्त्रिदशेष्वेव, प्रतिपतितपरिणामस्तु नानामतिसम्भवाद्यथापरिणाम सर्वगतिभाग् स्यात्, बद्धायुष्कोऽपि यदि तदानी कालं न करोति, तथापि सप्तके क्षीणे नियमादवतिष्ठते, न चारित्रमोहक्षपणाय यतते, ननु यदि दर्शनत्रिकमपि क्षयं नीतं ततः किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टिः ? उच्यते, सम्यग्दृष्टिः, सम्यग्दर्शनाभावे सम्यग्दृष्टित्वमनुपपन्नमिति चेत न, अभिप्राया-

नवगमात्, इह निर्मदनीकृतमदनकोद्रवकल्पा अपगतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव सम्यग्दर्शनं, तदेव क्षीणं, यत्पुनरात्मपरिणामस्वभावं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणं, अपि तु तदतीव श्लक्ष्णशुद्धाभ्रपटलविगमेन मनुष्यस्य दृष्टिरिव शुद्धजलानुगतशुद्धवस्त्रमिव वा जलक्षये विशुद्धतरस्वरूपं स्यात्, यदि पुनरबद्धायुः क्षपकश्रेणिमारभते ततः सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहक्षपणाय यतते, सम्यक्त्वस्य क्षपितशेषेऽवतिष्ठमान एवाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं समकमेव क्षपयितुमारभते, एतेषु चार्द्धक्षपितेष्वन्याः षोडश प्रकृतीः क्षपयति ॥१२१॥ तत्प्रतिपादकमिदं गाथाद्वयं—

गइआणुपुव्वी दो दो जाइनामं च जाव चउरिंदी ।
आयावं उज्जोयं थावरनामं च सुहुमं च ॥१२२॥
साहारणमपज्जत्तं निद्दानिद्दं च पयलपयलं च ।
थीणं खवेइ ताहे अवसेसं जं च अट्ठण्हं ॥१२३॥

गतिश्चानुपूर्वी च गत्यानुपूर्व्यौ द्वे द्वे, नरकगतिः नरकानुपूर्वी, यथा वृषभो नासिकान्यतरनद्धो योग्यं स्थानं नीयते तथा जीवोऽपि यथा कर्मपुद्गलसंहत्या विशिष्टस्थानं प्राप्यते, यया वा ऊर्ध्वोत्तमाङ्गाधश्चरणादि-

रूपो नियमितशरीरविशेषः स्यात् साऽनुपूर्वी, जातिनाम एकेन्द्रियादिनाम, यावच्चतुरिन्द्रियाः, चः समुच्चये, आतपं—आतपनाम यदुदयादातपवान् स्यात्, एवमुद्योतं, स्थावराः पृथिव्यादयस्तन्नाम, सूक्ष्मं—सूक्ष्मनाम, चौ प्राग्वत्, साधारणमिति साधारणनाम अनन्तवनस्पतिनामेत्यर्थः, अपर्याप्तकमित्यपर्याप्तकनाम, निद्रानिद्रां च प्रचलाप्रचलां च स्त्याना—चैतन्यऋद्धिर्यस्यां सा स्त्यानर्द्धिः—पञ्चमीनिद्रा तां, इह भाष्यकर्मग्रन्थादौ अत्रान्तरे षोडशैव प्रकृतयः क्षप्यमाणत्वेनाभ्युपगम्यन्ते, न सप्तदश, यतस्तन्मते, अपर्याप्तकर्म इह न क्षिप्यते, किन्तु अयोगिनि द्विसप्ततिकर्मप्रकृतिकदम्बकमध्ये तत् क्षपयति, तस्मान्मतान्तरत्वेनेह सप्तदशानामुपन्यासो न विरुध्यते, ततश्चापर्याप्तवर्जषोडशप्रकृतीः क्षपयित्वा तदनन्तरं यदष्टानां कषायाणां शेषं तत् क्षपयति, सर्वमिदमन्तर्मुहूर्त्तेन, ततो नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यषट्कं, ततः पुरुषवेदस्य खण्डत्रयं कृत्वा खण्डद्वयं युगपत्क्षपयति, तृतीयखण्डं तु सञ्ज्वलन क्रोधे क्षिपति, पुरुषे प्रतिपत्तर्ययं क्रमः, नपुंसकादौ प्रतिपत्तर्ययं क्रमः, नपुंसकादौ प्रत्तिपत्तर्युपशमश्रेणिन्यायो वान्यः, ततः क्रोधादीन् चतुरः सञ्ज्वलनान् प्रत्येकमन्तर्मुहूर्त्तमात्रेण क्षपयति क्षपणं, चैषां खण्डत्रयादिकरणक्रमेण पुरुषवेदवद्वान्यं, तथाहि—क्रोधसत्कं तृतीयखण्डं माने प्रक्षिपति, मानसत्कं मायायां, मायासत्कं लोभे, क्षपणकालश्च प्रत्येकमन्तर्मुहूर्तमानः सर्वत्र ज्ञेयः, श्रेणिरप्यन्तर्मुहूर्तमानैव, एकस्मिन्नप्यन्तर्मुहूर्ते लघुतराणामन्तर्मुहूर्तनामसङ्ख्येयानां भावात्, लोभस्य तु तृतीयखण्डं सङ्ख्येयानि खण्डानि करोति, तानि च खण्डानि पृथक् पृथक् कालभेदेन क्षपयति, तेषामपि च सङ्ख्येयतमं चरमखण्डं असङ्ख्येयानि खण्डानि करोति, तानि तु समये समये

एकैकशः क्षपयति, इह च क्षीणदर्शनसप्तको निवृत्तिबादर उच्यते, ततः ऊर्ध्वमनिवर्त्तिबादरो यावत् सङ्ख्यातमं चरमं लोभखण्डं, तत ऊर्ध्वमसङ्ख्येयानि लोभखण्डानि प्रतिसमयमेकैकखण्डं क्षपयन् सूक्ष्मसम्परायो यावच्चरमलोभांशक्षयः अत ऊर्द्ध्वं यथाख्यातचारित्री स्यात्, स च महासमुद्रतरणश्रान्तवत् मोहसागरं तीर्त्वाऽनाभोगनिवर्तिकरणेन विश्राम्यति, ततः छद्मस्थवीतरागत्वद्विचरमसमययोः प्रथमसमये निद्राप्रचले क्षपयति, चरमे समये पञ्चविधं ज्ञानावरणं चतुर्विधं दर्शनावरणं पञ्चविधमन्तरायमिति चतुर्दश प्रकृतीर्युगपत् क्षपयित्वाऽनन्तरसमये केवलज्ञानं केवलदर्शनं चोत्पादयति ॥ १२२–१२३ ॥ अन्ये त्वेवमभिदधति, तन्मतेन तिस्रोऽन्यकर्तृक्या इमा गाथाः—



वीसमिऊण नियंठो दोहि उ समएहि केवले सेसे ।
पढमे निद्दं पयलं नामस्स इमाओ पयडीओ ॥१२४॥
देवगइआणुपुव्वी विउव्वि संघयण पढमवज्जाइ ।
अन्नयरं संठाणं तित्थयराहारनामं च ॥१२५॥
चरमे नाणावरणं पंचविहं दंसणं चउवियप्पं ।
पंचविहमंतरायं खवइत्ता केवली होइ ॥१२६॥

विश्राम्य क्षणं निर्ग्रन्थः द्वाभ्यां समयाभ्यां केवले उत्पत्स्यमाने प्रथमे निद्रां प्रचलां नाम्नश्चेमाः प्रकृतीः देवगत्यानुपूर्व्यौ वैक्रियनाम प्रथमवर्जानि पञ्च संहननानि आत्मवर्जानि पञ्च संस्थानानि, यदात्मानः यत्–संस्थानं तन्मुक्त्वेत्यर्थः, आहारकनाम तीर्थंकरनाम च, चेत्तीर्थकरः क्षपकस्तदाऽऽहारकमेव, चरमे–द्वितीये समये ज्ञानावरणं पञ्चविधं दर्शनं चतुर्विधं पञ्चविधमन्तरायं क्षपयित्वा केवली भवति, एतच्च मतमसमीचीनं, चूर्णिकृतो भाष्यकृतः सर्वेषाञ्च कर्मग्रन्थकाराणामसम्मतत्वात्, केवलं वृत्तिकृता केनाप्यभिप्रायेण लिखितमिति, सूत्रेऽप्येता गाथाः प्रवाहपतिताः निर्युक्तिकारकृतास्त्वेता न ॥१२४–१२५–१२६॥ उत्पन्नकेवलज्ञानः सर्ववस्तु जानातीत्याह—

संभिण्णं पासंतो लोगमलोगं च सव्वओ सव्वं ।
तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ॥१२७॥

सम्–एकीभावेन भिन्नं सम्भिन्नं, यथा बहिस्तथा मध्येऽपीत्यर्थः, पश्यन् लोकमलोकञ्च सर्वतः–सर्वासु दिक्षु सर्वं–निरवशेषं, अमुमेवार्थं स्पष्टयन्नाह–तन्नास्ति किमपि यन्न पश्यति, भूतं–अतीतं, भव्यं–वर्तमानं, भविष्यच्च–भावि, चः समुच्चये ॥१२७॥ इत्यमुपोद्घातनिर्युक्तौ प्रस्तुताया प्रसङ्गतो यदुक्तं–'तपोनियमज्ञानवृक्षमारूढः केवली'त्यमो

केवलाति दर्शितः, एतस्मात् सामायिकश्रुतमाचार्यपारम्पर्येणायातं, एतस्माच्च जिनप्रवचनप्रवृत्तिरित्यादि, सर्वं प्रासङ्गिकं निर्युक्तिसमुत्थानप्रसङ्गेनोक्तं, इदानीमपि केयं जिनप्रवचनोत्पत्तिः ? कियदभिधानं चेदं जिनप्रवचनं ? को वाऽस्याभिधानविभागः ? इत्येतत् प्रासङ्गिकशेषं शेषद्वारसङ्ग्रहं चाभिधित्सुराह—

जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य ।
दारविही य नयविही वक्खाणविही य अणुओगो ॥१२८॥

जिनप्रवचनोत्पत्तिः प्रवचनैकार्थिकानि विभागश्च, इदं त्रयमपि प्रसङ्गशेषं द्वाराणि उद्देशनिर्देशादीनि तेषां विशिष्टप्ररूपणं स्वरूपकथनं द्वारविधिः, अयमुपोद्घातोऽभिधीयते, नयविधि रुपक्रमादीनां मूलानुयोगद्वाराणां चतुर्थानुयोगद्वारं, व्याख्यानस्य विधिर्व्याख्यानविधिः, शिष्याचार्यपरीक्षाभिधानं, अनुयोगः—सूत्रस्पर्शिकनिर्युक्तिः सूत्रानुगमश्चेति समुदायार्थः । आह—

चतुर्थमनुयोगद्वारं नयविधिमभिधाय पुनस्तृतीयानुयोगाभिधानं किमर्थं ?, उच्यते, नयानुगमयोः सहचरभावप्रदर्शनार्थं, तथाहि—नयानुगमौ प्रतिसूत्रं युगपदनुधावतः, नयमतशून्यस्यानुगमस्याभावात्, अनुयोगद्वारचतुष्टयोपन्यासे तु नयानामन्तेऽभिधानं युगपद्वक्तुमशक्यत्वात्, आह—चतुरनुयोगद्वारातिरिक्तव्याख्यानविधेरुपन्या-

सोऽनर्थकः, न, अनुगमाङ्गत्वात्, व्याख्याङ्गत्वाच्चानुगमाङ्गता ॥१२८॥ तत्र जिनप्रवचनोत्पत्तिर्निर्युक्ति समुत्थान-प्रसङ्गतोऽभिहिता, अर्हद्वचनत्वात् प्रवचनस्य, इदानीं प्रवचनैकार्थिकानि तद्विभागं च गाथात्रयेणाह—

एगट्ठियाणि तिण्णि उ पवयण सुत्तं तहेव अत्थो अ।
इक्किक्कस्स य इत्तो नामा एगट्ठिआ पंच ॥१२९॥

एकोऽर्थो येषां तान्येकार्थिकानि त्रीण्येव, कानि?, प्रवचनं प्राग् व्याख्यातं, सूचनात्सूत्रं, अर्थः—तद्विवरणं, चः समुच्चये, इह प्रवचनं सामान्यश्रुताभिधानं सूत्रार्थौ तु तद्विशेषौ, ननु सूत्रार्थयोः प्रवचनेन सहैकार्थता युक्ता, तद्विशेषत्वात्, सूत्रार्थयोस्तु परस्परं विभिन्नत्वान्न युज्यते, यतः सूत्रं व्याख्येयमर्थस्तु तद्व्याख्यानमिति, अथवा त्रयाणामप्येषां भिन्नार्थतैव युज्यते, प्रत्येकमेकार्थिकविभागसद्भावात्, अन्यथा एकार्थतायां सत्यां भेदेनैकार्थिका-भिधानमयुक्तं? उच्यते यथा मुकुलविकसितयोः पद्मविशेषयोः सङ्कोचविकासरूपपर्यायभेदेऽपि कमलसामान्य-रूपतयाऽभेदः, एवं सूत्रार्थयोरपि प्रवचनापेक्षया परस्परतश्चेति तथाहि अविवृत्तं मुकुलतुल्यं सूत्रं, तदेव विवृत्तं विकचकल्पमर्थः, प्रवचनमुभयमपि, यथा चैषामेकार्थिकविभाग उपलभ्यते कमलमरविन्दं पङ्कजमित्यादि पद्मै-कार्थिकानि, तथा कुड्मलं सङ्कुचितमित्यादि मुकुलैकार्थिकानि, तथा विकचं फुल्लं विबुद्धमित्यादि विकसितै-कार्थिकानि, तथा प्रवचनसूत्रार्थानामपि पद्मकुड्मलविकसितकल्पानामेकार्थिताविभागोऽविरुद्धः, आह—यदुक्तं

प्रवचनैकार्थिकानि वाच्यानि तद्व्याहन्यते, न, सामान्यविशेषरूपत्वात्प्रवचनस्य, सूत्रार्थयोरपि प्रवचनविशेषरूपत्वेन प्रवचनत्वोपपत्तेः, आह-यद्येवं विभागश्चेति द्वारोपन्यासानर्थक्यं, न, विभागश्चेति कोऽर्थः ?, नाविशेषेणैकार्थिकानि वाच्यानि सामान्यविशेषरूपस्यापि पञ्चदश, किं तर्हि ?, विभागश्च वाच्यः, विशेषगोचराभिधानपर्यायाणां सामान्यगोचराभिधानपर्यायत्वानुपपत्तेः, नहि चूतसहकारादयो वृक्षादिवत् शब्दपर्याया भवन्ति, एकैकस्य प्रवचनस्य सूत्रस्यार्थस्य च नामान्येकार्थिकानि पञ्च ॥१२९॥ अथ प्रवचानसूत्रयोः पञ्च पञ्च एकार्थिकान्याह—

सुयधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा ।
सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा ॥१३०॥

श्रुतस्य धर्मः—स्वभावः श्रुतधर्मः, श्रुतस्य बोधस्वभावत्वात्, श्रुतस्य धर्मो बोधोऽभिधीयते, तीर्यते संसारसमुद्रोऽनेनेति तीर्थं, सङ्घास्तदुपयोगानन्यत्वात्, प्रवचनं तीर्थमुच्यते, मृज्यते-शोध्यतेऽननेति मार्गः, प्रगतमभिविधिना जीवादिषु पदार्थेषु वचनं प्रावचनं, जीवादितत्वानि प्रवक्तीति प्रवचनं, सूचनात्सूत्रं, तन्यतेऽनेन अस्मादस्मिन्निति तन्त्रं, ग्रथ्यतेऽनेनार्थ इति ग्रन्थः, पठनं पाठः पठ्यते वा तदिति पाठः, शास्यतेऽनेन ज्ञेयमात्मा वेति शास्त्रं, एकार्थिकानीति पुनरभिधानं सामान्यविशेषयोः कथञ्चिद्भेदख्यापनार्थम् ॥१३०॥ अथानुयोगैकार्थिकान्या—

अणुओगो य नियोगो भास विभासा य वत्तियं चेव।
अणुओगस्स उ एए नामा एगट्ठिआ पंच ॥१३१॥

सूत्रस्यार्थेन सहानुकूलं योजनमनुयोगः, यथा घटशब्देन घटोऽभिधीयते, नियतो निश्चितो वा योगः-सम्बन्धो नियोगः, यथा घटशब्देन घट एवोच्यते, न पटादिः, भाषणं भाषा, व्यक्तीकरणमित्यर्थः, यथा घटनाद् घटः, विविधा भाषा विभाषा-पर्यायशब्दैः स्वरूपकथनं, यथा घटः कुटः कुम्भः इति, वार्तिकं त्वशेषपर्यायकथनं, एतान्यनुयोगस्यैकार्थिकानि नामानि, अयं समुदायार्थोऽवयवार्थं प्रतिद्वारं च वक्ष्यति तत्र, प्रवचनादीनामविशेषेण एकार्थिकाभिधानप्रक्रमे सत्येकार्थिकानुयोगादेर्भेदेनान्वाख्यानमर्थगरीयस्त्वख्यापनार्थम् ॥१३१॥ तत्रानुयोगाख्यमाद्यद्वारमाह—

नामं ठवणा दविए खित्ते काले य वयण भावे य।
एसो अणुओगस्स उ णिक्खेवो होइ सत्तविहो ॥१३२॥

नामानुयोगो-यस्य जीवादेरनुयोग इति नाम क्रियते, नामव्याख्या वा, स्थापना-अक्षनिक्षेपादिरूपा, तत्र योऽनुयोगं कुर्वन् स्थाप्यते सोऽनुयोगानुयोगवतोरभेदोपचारात् स्थापनानुयोगः, यत्र क्षेत्रे काले वाऽनुयोगस्तयो-

व्याख्या वा क्रियते स क्षेत्रकालानुयोगः, वचनानुयोगो यथेत्थंभूतमेकवचनमित्यादि, भावानामौदयिकादीनामनुयोगो भावानुयोगः ॥१३२॥ उक्तोऽनुयोगः, साम्प्रतमनुयोगाननुयोगप्रतिपादकदृष्टान्तानाह—

वच्छगगोणी १ खुज्जा २ सज्झाए ३ चेव बहिरउल्लावो ४ ।
गामिल्लए ५ वयणे सत्तेव य हुंत्ति भावंमि ॥१३३॥

नामस्थापने सुगमे, द्रव्यानुयोगे तत्प्रसङ्गतो द्रव्यानुयोगे च वत्सगावावुदाहरणं, गोदोहको यदि यः पाटलाया वत्सस्तं बहुलायां मुञ्चति, बाहुलेयं पाटलाया ततोऽननुयोगः स्यात्, तस्य क्षीरस्य च विनाशो यदि पुनर्यो यस्यास्तं तस्या एव मुञ्चति ततोऽनुयोगः, तस्य च क्षीरादिप्राप्तिः, एवमिहापि यदि जीवलक्षणेन द्रव्येणाजीवं प्ररूपयति अजीवलक्षणेन वा जीवं तर्हि अननुयोगः, यतस्तं भावमन्यथा गृह्णाति, तेनार्थो विसंवदति, अर्थेन च विसंवदता दुग्धस्थानीयं चारित्रं विसंवदति, चारित्रेण विना न मोक्षः, मोक्षाभावे दीक्षा निरर्थिका, जीवलक्षणेन जीवं प्ररूपयति, अजीवलक्षणेनाजीवं, ततोऽनुयोगः, ततः कार्यसिद्धिः, तथा ह्यविकलोऽर्थावगमस्ततश्चरणवृद्धिस्ततो मोक्षः ।

क्षेत्रानुयोगानुयोगयोः कुब्जोदाहरणं, प्रतिष्ठानेशः शातवाहनः प्रतिवर्षमागत्य भृगुकच्छे नरवाहननृपं रुणद्धि ऋतुषट्कं स्थित्वा वर्षासु स्वपुरं याति, अन्यदाऽवगेहकयातेन तेन राज्ञा स्वपुरं जिगमिषुणा स्थानमण्डपे पतद्ग्रहं विनापि भूमौ थूत्कृतं, तस्य च पतद्ग्रहधारिण्या कुब्जयाऽतीवभावज्ञया प्रगे यास्यति स्वपुरं नृपस्तेनेत्थमिह निष्ठीवतीति सञ्चिन्त्योक्तं स्वपरिचितयानशालिकस्य, ततस्तेन प्रगुणीकृत्य यानानि गच्छत एव राज्ञः पुरतोऽपि प्रवर्त्तितानि, तत्पृष्ठतश्च सर्वोऽपि स्कन्धावारः प्रवृत्तो गन्तु, तध्धूलिं दृष्ट्वाऽचिन्ति नृपेण, ननु मया कस्यापि प्रयाणकं नोक्तं धूलीभयात्, किलाहं स्वल्पपरिच्छदो भूत्वा मैन्यस्य पुरत एव यास्यामि, एतच्च विपरीतं जातं, परम्परया ज्ञातं कुब्जोक्तं, तदत्र सभामण्डपादिक्षेत्रेण निष्ठीवनस्याननुयोगः, निष्ठीवनादिरक्षणप्रमार्जनोपलेपनादि-कस्त्वनुयोगः, एवमेकान्तेन नित्यमेकप्रदेशं क्षेत्रं प्ररूपयतोऽननुयोगः, स्याद्वादलाञ्छितं तदेव प्ररूपयतोऽनुयोगः ।

कालाननुयोगानुयोगयोः स्वाध्यायोदाहरण—साधुरेकः प्रादोषिककालग्रहणानन्तरं कालिकः श्रुतमतीतमेऽपि तत्परावर्त्तनवेलामजानानः परावर्तते, ततः सम्यग्दृष्टिक्षेत्रदेवतया छलरक्षणार्थं मथितकारिकारूपेण मथितभृतघटं मस्तके निधाय तदन्तिके गतागतानि कुर्वत्या 'मथितं लभ्यते' इति महाशब्देन पुनः पुनः घोषयन्त्योद्वेजितः साधुः, तेनोक्तं अहो तव तक्रविक्रयवेला, तयाप्यूचे अहो तवापि स्वाध्यायवेला, ततः साधुरुपयुज्य मिथ्यादुष्कृतं ददाति, एष स्वाध्यायस्य कालाननुयोगः, काले तु पठतस्तदनुयोगः, प्रस्तुतेऽकालधर्माणां वैपरीत्ये सम्यक्प्ररूप-णेऽननुयोगानुयोगौ वाच्यौ, वचनानुयोगस्येह प्राधान्यख्यापनार्थं वचनविषयमननुयोगानुयोगयोर्दृष्टान्तद्वयं, बधि-

राङ्खापोदाहरणं ग्रामेयकोदाहरणं च, तत्राद्य—एकस्मिन्नगरे बधिरकुटुंबकं वसति, स्थविरः स्थविरी तयोः पुत्रस्तस्य भार्या च, पुत्रो हलं वाहयति, तत् पार्श्वे पान्थेन पृष्टो मार्गः, तेन कथितं—मम गृहजातौ वृषभावेतौ, भार्यया भक्तमानीतं, तस्याग्रे तेनोक्तं मम वृषभौ शृङ्गितौ, तयोक्तं—अन्नं क्षारमितरद्वा न जानामि, तव मात्रा रद्धं, तया गृहे श्वश्राग्रे कथितं, तयोक्तं—सूक्ष्ममितरद् वा कर्तयामि का ते चर्चा ?, तया स्वपत्यग्रे कथितं, तेनोक्तं-मया तिल एकोऽपि नाखादि, इत्थं एकवचनादिकमप्युक्तं द्विकवचनादितया यः शृणोति, तथैवान्यस्य प्ररूपयति, तस्याननुयोगः, यथावत् श्रवणेषु त्वनुयोगः, एकस्मिन्नगरे विधवा स्त्री, तस्या मूर्खः पुत्रः, स पुत्रः मात्राऽभाणि—वत्स ! विनयो विधेयः, स आह—कीदृग् विनयः ?, तया चोक्तं—जोत्कारनीचैर्गतिच्छन्दोनुवर्तनादि कार्यं, स पुर गच्छन्नन्तरा मृगवधार्थं निलीनव्याधानां महाशब्देन जोत्कारमकरोत्, मृगेषु नष्टेषु, तैस्ताडितः, उक्ते सद्भावे तैरुक्तमीदृशे कार्ये नीचैरागन्तव्यं, ततोऽसौ रजकान् दृष्ट्वा नीचैरेति. वस्त्रचौरोऽयमितिबुद्ध्या बद्धः, तैरुक्तश्च शुद्धं भवतु इति वाच्यं—अग्रे गच्छता तथोक्ते बीजवापकैरुक्तो बहु भवत्विति, अन्यत्र मृतकं दृष्ट्वा तथोक्ते तैः शिक्षितः—अत्यन्तवियोगोऽस्तु, विवाहे तथोक्ते भणितः—शाश्वतमस्त्विति, निगडबद्धं दण्डिनं दृष्ट्वोक्ते तथैव शिक्षितः—एतस्माद्भवतां मोक्षोऽस्तु, मैत्रीं कुर्वन्तु तथोक्ते हतो मुक्तश्चैकं दण्डिकुलपुत्रकं सेवते, अन्यदा दुर्भिक्षे रब्बा सिद्धाऽस्तीति निवेदयेति जायादेशात्तथैवोक्तः, स महाजनमध्यगतो लज्जितः, गृहागतस्तं ताडयामास, पुनरुक्तश्च—तेनेदृशं कार्यं

विमृश्य कर्णयोगगत्य कथ्यते, अन्यदा प्रदीपानले लग्ने विलम्ब्य कथिते गृहं दग्धं, पुनः शिक्षितः—ईदृशे कार्ये न विलम्ब्यते, स्वयमेव कचवरजलादि प्रक्षिप्यते, अन्यदा केशान् धूपयतस्तस्य मूर्ध्नि गोभक्तं प्रक्षिप्तं, एव शिष्योऽपि यावन्मात्रं गुरुः कथयति तावन्मात्रमेव स्वयं द्रव्याद्यौचित्यपरिज्ञानशून्यो यो वक्ति तस्य वचनाननुयोगः, यस्तु तदौचित्येन वक्ति तस्य तदनुयोगः, भवन्ति—भावे भाव विषयाननुयोगानुयोगयोर्दृष्टान्ताः, ॥१३३॥ ते चेमे—

मवठाभज्जा १ सत्तवइए २ अ कुंकनागदारए ३ नउले ४ ।
कमलामेला ५ संवस्स साहसं ६ सेणिए कोवो ७ ॥१३४॥

तत्राद्यं—श्रावकभार्या. यथा स्वकलत्रमपि तत् सखीलक्षणपरकलत्राभिप्रायेण भुञ्जानस्य गृहीताणुव्रतस्य श्राद्धस्य भावाननुयोगः, पश्चातापे प्रियोक्तौ यथावदवगमे तु भावानुयोगः १, सप्तभिः पदैर्व्यवहरतीति साप्तपदिको, वङ्कचुलस्यात्र स्वभगिनीमपि परपुरुषाभिप्रायेण जिघांसोर्भावस्याननुयोगो यथावदवगमे त्वनुयोगः २, कोङ्कणदेशे एकेन नरेण भार्यामृतौ अन्यां परिणेतुमिच्छता सपत्नीपुत्रोऽस्तीति कन्यामलभमानेन पुत्रमारणेच्छया, अरण्ये स्वमुक्तबाणानयने आदिष्टः पुत्रः, पृष्ठे बाणो मुक्तः, रक्षितः, द्वितीये तूक्ते ज्ञातोऽभिप्रायो, ज्ञातेऽननु-

योगोऽज्ञातेऽनुयोगः ३, नकुलोदाहरणं—चारभटी पदातिपत्नी, सुतनकुलौ, नकुलेन बालकापकारी सर्पोऽमारि, नकुलं शोणितोपलिप्तवक्त्राद्यवयवं घ्नन्त्यास्तस्य भावाननुयोगो मध्येगतायाश्च मृतं सर्पं दृष्ट्वा यथावत् ज्ञाने भावानुयोगः ४ सागरचन्द्रस्य शम्बं, कमलामेलां मन्यमानस्य भावस्याननुयोगः, सम्यग्ज्ञानेऽनुयोगः, शम्बसाहमज्ञाते शम्बस्य जाम्बवतीं मातरमप्याभीरीं मन्यमानस्य भावस्याननुयोगः, पश्चात्मुख्यरूपप्रकटनादवगतेऽनुयोगः ६, श्रेणिककोपे सुशीलामपि चिल्लणां कुशीलां मन्यमानस्य श्रेणिकस्य भावस्याननुयोगो, वीरान्ते पृच्छानन्तरं सम्यगवगमेऽनुयोगः ७ एवमनुयोगः सप्रतिपक्षः प्रपञ्चेनोक्तः, नियोगोऽपि पूर्वमुक्तस्वरूपमात्रः सोदाहरणोऽनुयोगवद् ज्ञेयः ॥१३४॥ अधुना भाषादिस्वरूपमाह—

कट्ठे १ पुत्थे २ चित्ते ३ सिरिघरिए ४ पुण्ड ५ देसिए ६ चेव ।
भासगविभासए वा वत्तीकरणे अ आहरणा ॥१३५॥

यथा—काष्ठे कश्चिद्रूपस्याकारमात्रं करोति, कश्चित् स्थूलावयवनिष्पत्तिं, कश्चित्वशेषांगोपाङ्गाद्यवयवनिष्पत्तिमित्येवं काष्ठकल्पं सामायिकादिसूत्रं, तत्र भाषकः परिस्थूरमर्थमात्रमभिधत्ते, यथा समभावः सामायिकं, विभाषकस्तु तस्यैवार्थमनेकधाऽभिधत्ते यथा समभावः सामायिकं, समानां वा आयः समायः स एव स्वार्थे

इकण्प्रत्ययविधानात् सामायिकमित्यादि, व्यक्तिकरणशीलो व्यक्तिकरः, यः खलु निखशेषव्युत्पत्ति–अतिचारानतिचारफलादिभेदभिन्नमर्थं भापते, स च निश्चयतश्चतुर्दशपूर्वविदेव, इह भापकादिस्वरूपव्याख्यानाद् भापादय एव प्रतिपादिता द्रष्टव्याः, भापादीनां तत्प्रभवत्वात्, एवं पुस्ते–लेप्यकर्मणि, चित्रकर्मणि, श्रीगृहं–भाण्डागारमस्यास्तीति श्रीगृहिकस्तद्दृष्टान्तः, यथा कश्चिद्रत्नानां भाजनं वेत्ति, अन्यस्तेपां जातिं प्रमाणं च, अपरस्तु तद्गुणानपि, एवमाद्यद्वितीयकल्पा भापकादयो द्रष्टव्याः, पुण्ड्रमिति पद्मं यथेपद्भिन्नमर्द्धभिन्नं विकसितं च त्रिधा भवति, एवं भापाद्यपि क्रमेण, देशनं देशः कथनमित्यर्थः, सोऽस्यास्तीति देशिकः–पथिकः, तत्र कश्चिद्देशिकः पन्थानं पृष्टः सन् दिग्मात्रमेव कथयति, कश्चित्तु तद्व्यवस्थितग्रामनगरादिभेदेन, कश्चित्पुनस्तदुत्थगुणदोपभेदेन, एवं भापकादयोऽपि तदेवं विभाग उक्तः। सम्प्रति द्वारविधिमवसरप्राप्तं विहाय व्याख्यानविधिर्विषयः यतोऽत्रैवाचार्यशिष्ययोर्गुणदोपाः प्रतिपाद्यन्ते, येनाचार्यो गुणवते शिष्यायानुयोगं करोति, शिष्योऽपि गुणवदाचार्यसन्निधावेव शृणोति, आह–यद्येव द्वारगाथायामप्येवं तर्हि कथं नोपन्यस्तः?, उच्यते, सूत्रव्याख्यानस्य गुरुत्वख्यापनार्थं, विशेषेण सूत्रव्याख्यायामाचार्यः शिष्यो वा गुणवान् अन्वेष्टव्यः ॥१३५॥

गोणी १. चंदणकंथा २, चेडीओ ३, सावए ४, वहिर ५, गोहे ६ ।
टंकणओ ववहारो ७ पडिवक्खो आयरिय–सीसे ॥१३६॥

तत्र गोदृष्टान्तः, एते चाचार्यशिष्ययोः संयुक्ता दृष्टान्ताः, एक आचार्यस्यैकः शिष्यस्य, द्वौ चैकस्मिन्न-वधार्यते, एकैनैकस्य धूर्तस्य पार्श्वाद्गो रोगिणी उत्थातुमप्यसमर्था निविष्टैव क्रीता, धूर्त्तो नष्टः, क्रेताऽपि याव-त्तामुत्थापयति तावन्न शक्नोत्यसौ, ततस्तथैव स्थिताऽन्यस्य मूल्येन दातुमारब्धा, क्रेता तामुत्थापयितुं न ददातिवक्ति च मयोपविष्टैव चेयं गृहीता त्वमपि तथैव गृहाण, एवं यः आचार्यः पृष्टः परिहारानन्त दातुमशक्तो भणति-मयाऽप्येवं श्रुतं यूयमप्येवं शृणुत, तत्पार्श्वे न श्रोतव्यं, यः पुनरविकलगोविक्रयिकवदाक्षेपनिर्णयप्रनिर्णयेप्रसक्त-परस्तत्पार्श्वे श्रोतव्यं, शिष्योऽपि योऽविचारितग्राही प्रथमगोक्रयिक इव सोऽयोग्योऽन्यस्तु योग्यः १ चन्दन-कन्थोदाहरणं—यथा कृष्णस्य तुष्टेनामरेणाशिवोपशमिनीचन्दनमयी भेरी दत्ता, सा षट्षड्मासपर्यन्ते वाद्यते, तच्छब्दः श्रोतुरतीतमनागतं च प्रत्येकं पाण्मासिकमशिवमुपशाम्यति, तत्रान्यदागतस्य वणिजो दाहज्वरार्त्तस्य लक्षमूल्यलोभेन भेरीपालकेन पलमात्रं छित्वाऽदायि, तत्रान्यचन्दनखण्डं दत्तं, सा कालेन चन्दनकन्था जाता, कार्याऽक्षमां तां ज्ञात्वा कृष्णेन तं भेरीपालकं हत्वाऽष्टमभक्तेन सुरमाराध्यान्यां लात्वाऽन्यभेरीपालकः कृतः, स तां यथावद्रक्षति, ततः स इष्टः, ततः एवं यः शिष्यः सूत्रमर्थं वा परमतेन स्वकीयेनैव ग्रन्थान्तरेण वा मिश्रयित्वा कन्थीकरोति सोऽनुयोगश्रवणस्य न योग्यः, एवं कन्थीकृतसूत्रार्थो गुरुरप्यनुयोमभाषणस्य न योग्यः, किन्त्वविनाशितसूत्रार्थाः शिष्याचार्या अनुयोगस्य योग्याः २ चेट्यौः जीर्णाभिनवश्रेष्ठिपुत्रिके तद्दृष्टान्तः, यथा वसन्तपुरे जीर्णश्रेष्ठिसुताऽभिनवश्रेष्ठिसुतया जलाशये स्नान्त्या आभरणानि जग्राह, ममैवैतानि इति सा वक्ति,

राजकुले व्यवहारः, कारणिकैरुक्ता सा अस्माकमेव पश्यताममूनि परिधाय दर्शय, सा चानभ्यासादन्यस्थानोचितमाभरणमन्यत्र नियोजयति, यदपि स्थाने युङ्क्ते तदप्यश्लिष्टमेवाभाति, अन्यथा परिहितानि शोभन्ते च, ततो दण्डितोऽङ्गनिग्रहेण राजा श्रीगश्रेष्ठी, तत्सुता चानर्थभाग् जाता, एवमस्थानेऽर्थानां नियोक्ता न गुरुर्नापि शिष्यो योग्यः ३, श्रावकोदाहरणं-प्राग्वत्त्ववरमुपसंहारः ' चिरमच्चिअपि न सरइ सुत्तत्थं सावगो सभज्जं व । जो न स जुग्गो सीसो गुरुत्तणं तस्स दूरेण ॥१॥ वि.१४४२॥ ४, बधिरोदाहरणं-प्राग्वदुपसंहारस्तु-"अन्नं पुट्ठो अन्नं जो साहइ सो गुरू न बहिरोव्व । न य सीसो जो अन्नं सुणेइ अणुभासए अन्नं ॥१॥" ५, एवं गोदोहोदाहरणोपसंहाराऽपि वाच्यः ६, टङ्कणव्यवहारोदाहरणं-इहोत्तरापथे टङ्कणा नाम म्लेच्छाः, दक्षिणपथादायातवस्तूनि गृह्णन्ति, मिथो भाषां न जानते, एके पण्यपुञ्जं अन्ये कञ्चनं मुञ्चति, इच्छापूर्त्तौ गृह्णन्ति, नान्यथा, एषामिष्टः प्रतीष्टश्च व्यवहारो, यथा-"एवं अदखेव निव्वयपसंगदाणगहणाणुवत्तिणो दोवि । जुग्गा मिस्सायरिया टंकणवणिओवमा एमा ॥१॥" इत्य गमादिषु द्वारेषु साक्षादभिहितार्थविपर्ययः प्रतिपक्षः, स आचार्यशिष्ययोर्यथायोग्यं योज्यः, स च योजित एव ॥१३६॥ अथ गाथाद्वयेन विशेषतः शिष्यदोषगुणानाह-ननु शिष्यदोषगुणाना विशेषाभिधानं किमर्थं ? उच्यते, कालान्तरेण तस्यैव गुरुत्वभवनात्, अयोग्याय च गुरुपदविधाने तीर्थकराज्ञालोपप्रसङ्गात्-

गाथा-१३६

कस्स न होही वेसो अनब्भुवगओ अ निरुवगारी अ ।
अप्पच्छंदमईओ पट्ठिअओ गंतुकामो अ ॥१३७॥

कस्य गुरोर्न भवति द्वेष्यः—अप्रीतिकरः ?, अपि तु भविष्यत्येव, अनभ्युपगतः श्रुतसम्पदो, अनिवेदिता-त्मेतिभावः, उपसम्पन्नोऽपि न सर्व एवाद्वेष्य इत्याह—निरुपकारी च गुरूणामनुपारको गुरुकृत्येष्वप्रवर्तकः, उपकार्यपि न सर्व एवाद्वेष्य इत्याह—आत्मच्छन्दा—आत्मायत्ता मतिर्यस्य कार्येषु असावात्मच्छन्दमतिकः, गुर्वा-यत्तमतिरपि न सर्व एवाद्वेष्य इत्याह—प्रस्थितो योऽन्यः कोऽपि शिष्यो गन्तुमनास्तस्य द्वितीयः, गन्तुकामश्च सदैव गन्तुमना व्यवतिष्ठते, वक्ति च कोऽस्य गुरोः सन्निधावतिष्ठते ?, समर्थ्यतामेतत् श्रुतस्कन्धादि ततो यास्यामीति, तदेवम्भूतः शिष्यो न योग्यः श्रवणस्य ॥१३७॥ अथ गुणानाह—

विणओणएहिं कयपंजलीहि छंदमुवुअत्तमाणेहिं ।
आराहिओ गुरूजणो सुयं बहुविहं लहुं देइ ॥१३८॥

विनयावनतैः पृच्छादिषु कृताः प्राञ्जलयो यैस्ते कृतप्राञ्जलयस्तैः, छन्दो—गुर्वभिप्रायस्तमिङ्गिताकारादिना विज्ञाय तदध्यवसितनद्वानसमर्थनकरणकारणादिनाऽनुवर्तमानैः, श्रुतं—सूत्रार्थोभयरूपं लघु—शीघ्रं ॥१३८॥ अथ प्रकारान्तरेण शिष्यपरीक्षामाह—

मेलवण-कुडग-चालणि-परिपूणग-हंस-महिस-मेसे अ ।
मसग-जलूग-विराली जाहग-गो-भेरि-आभीरी ॥१३९॥

एतानि शिष्ययोग्य.योग्यत्वप्रतिपादकान्युदाहरणानि, उदाहरणं द्विधा—चरित कल्पितं च, तत्रेदं कल्पितं— शैलो-मुद्गप्रमाणपाषाणविशेषः, घनो-मेघः, तदुदाहरण, यथा मुद्गशैलः पुष्करावर्त्तमेघश्च, तत्र नारदसदृग् कोऽपि नरः कलहं विलोकयति, स मुद्गशैलं भणति, तत्र नामग्रहणे पुष्करावर्त्तो भणति—तमेकधारया विदारयामि, शैलो भणति-यदि मे तिलतुषत्रिभागमप्यार्द्रयति तदा नाम न वहामि, पश्चात्तेन शैलस्य वचनानि मेघस्योक्तानि, स प्ररुष्टो युगप्रमाणाभिर्धाराभिर्वर्षति सप्तदिनान्ते भिन्नो भविष्यतीति स्थितः. नीरे उत्सगिते उज्वलतरो दृष्टः मेघो लज्जितो गतः, एवं कश्चिच्छिष्ये एकमपि पदं न तिष्ठति, कश्चिदाचार्यो भणति— अहं ग्राहयिष्यामि, पाठयितुमारब्धो, नश क्नोति, लज्जिता गतः; ईदृशस्य न दातव्य, प्रतिपक्षः, कृष्णभूमिः "वुट्ठेऽवि दोणमेहे न कण्हभोमाओ लोट्टए उदयं । गहणधारणसमत्थे, इय देयमाछित्तिकारंमि॥१॥" (वि.१४५८)। कुटा घटा उच्यन्ते. ते द्वेधा—नवा जीर्णाश्च, जीर्णा द्विधा—भाविता अभाविताश्च, भाविता द्विधा—प्रशस्तभाविता उगुर्वादिभिः, अप्रशस्तभाविताश्च लशुनादिभिः प्रशस्तभाविता वाम्या अवाम्याश्च, एवमप्रशस्तभाविताऽपि, येऽप्रशस्ता वाम्या ये च प्रशस्ता वाम्याः ते न सुन्दराः, इतरे सुन्दराः, अभाविता न केनापि भाविताः नवा अवाहादवतारितमात्राः,

एवमेव शिष्या नवा ये मिथ्यादृष्टयस्तत्प्रथमतया ग्राह्यन्ते, जीर्णा अपि येऽभावितास्ते सुन्दराः, अभाविता न केनापि भाविता नवा आवाहादवतारिताः, अथवा कुटाश्चतुर्विधाः, अधछिद्राः, अकण्ठाः, खण्डाः, सम्पूर्णाङ्गाः, यस्यैकपार्श्वे खण्डेन हीनता स खण्डकुटः, यदीच्छा तदाऽसौ प्रयत्नेन सज्जीकर्तुं पार्यते, अयमकण्ठखण्डयो-र्विशेषः, एवं शिष्या अपि चत्वारो वेदितव्याः, यो व्याख्यानमण्डल्यामुपविष्टः सर्वमर्थमवबुध्यते पश्चान्न किमपि स्मरति स च्छिद्रकुटसमः, योऽर्धमात्रं त्रिभागं चतुष्कोणहीनं वा सूत्रार्थमवधारयति यथावधारितं च स्मरति स खण्डकुटाभः, यस्तु किञ्चिदूनं धारयति स्मरति वा सोऽकण्ठाभः, सकलमप्याचार्योक्तं धारयति स्मरति च स सम्पूर्णकुटाभः. आद्योऽयोग्यः, शेषा यथोत्तरं प्रवराः, चालन्यां यथा जलं शीघ्रं गलति तथा शिष्यस्य सूत्रार्थौ यदा कर्णे प्रविशतस्तदैव विस्मृतौ स चालनीसमोऽयोग्यः तथा शैलच्छिद्रकुटचालनीभेदप्रदर्शनार्थमुक्तं भाष्यकारेण—

"सेलेयछिड्डचालिणि मिहोकहा सो उ उट्ठियाणं तु। छिड्डाह तत्थ विट्ठो सुमरिसु सरामि नेयाणि ॥१॥ एगेण विसइ बीएण नीइ कण्णेण चालिणी आह। धन्नोऽत्थ आह सेलो जं पविसइ नीइ वा तुब्भं॥२॥"(वि.१४६३-४)
चालनीप्रतिपक्षस्तापसखर्परं, तत्र द्रवमपि न स्रवति, परिपूर्णको नामघृतगलनं सुगृही स कचवरं धारयति घृतमुज्झति एवं—

"वक्खाणाइसु दोसं हिययंमि ठवेइ मुयइ गुणजालं। सो सीमो अ अजोग्गो भणितो परिपूणगसमाणो ॥१॥" ननु सर्वज्ञमतेऽपि दोपसम्भवइ इत्ययुक्तं, सत्यं, उक्तमत्र भाष्यकृता, "सव्वन्नुपमाणाओ दोसा हु न सन्ति जिणमए केऽचि। जं अणुवउत्तकहणं अपत्तमासज्ज व भवन्ति" ॥१॥ (वि० १४६६) : हंस–क्षीरमुदकमिश्रितं उदकमपहाय क्षीरमापिबति, हंसस्य हि जिह्वा अम्ला स्यात्, ततो यदा दुग्धमिश्रोदकमध्ये तां क्षिपति तदा जिह्वाया अम्लत्वगुणेन दुग्धे विराटिका भवति, ततो हंसो जलमुक्तवराटिकाभिः स्थितं पयः पिबति, एवं सुशिष्योऽपि दोपान्मुक्त्वा गुणान् गृह्णाति, स योग्यः।

"सयमवि न पिवइ महिसो न य जूहं पिवइ लोलियं उदयं विग्गहविकहाहिं तहा अथक्कपुच्छाहि य कुमीसो" ॥१॥ (१४६८ वि.) अवि गोपदमिवि पिवे सुठिओ तणुअत्तणेण तुडम्स। ण करेति कलुसमदगं मेसो एव सुमीसोऽवि ॥१॥ मशकः जलौकाः–ममगोव्व तुदं जच्चाइएहिं किच्छुभए कुमीसोऽवि। जलूगा व अदूमतो पिवइ सुमीसोऽवि सुयनाणं ॥१॥ (वि० १४७०)। छड्डेउं भूमीए जह खीरं पिअइ दुट्ठ मज्जारी। परिसुड्ढियाणपासे सिक्खइ एव विणयभंसी ॥१॥ जाहकः से हलकाभिधग्तिर्यग्विशेषः–पातुं थोवं थोवं खीरं पासाइं जाहओ लिहइ। एमेव जिअं काउं पुच्छइ मइम न खेएइ ॥१॥ गोउदाहरणं–एकेन धर्मार्थिना चतुर्णां द्विजानां गौर्दत्ता, आद्यश्चिन्तयति–कल्येऽन्यो दोहकः, किं दत्तैस्तृणादिभिः? अन्येऽप्येवं, गौर्मृता, अवर्णवादो लोके, अपु-

गाथा-१३९

नलभिः, एवं शिष्या अपि चिन्तयन्ति, न केवलमस्माकमाचार्यो व्याख्यानयति, किन्तु प्रतीच्छकानामपि, ते एव विनयादिकं करिष्यन्ति, किमस्माकम्? प्रतीच्छका अप्येवं चिन्तयन्ति निजशिष्या सर्वं करिष्यन्ति, किमस्माकं कियत्कालावस्थायिनामिति? एवं तेषां चिन्तयतामपान्तराल एवाचार्यो विषीदति, लोके तेषामवर्णवादः, गच्छान्तरे तेषां दुर्लभौ सूत्रार्थौ, ते चतुर्द्विजा इवायोग्याः, एष एव गोदृष्टान्तः, प्रतिपक्षेऽपि योज्यः, आद्येन चिन्तितं यद्यहमस्याधारिं न दास्यामि ततः क्षुधा धातुक्षयादेषा मरिष्यति, लोकेऽवर्णवादः, गोहत्या च भविष्यति, दानव्यवच्छेदः, एवं शेषैरपि, लोके साधुवादोऽजनि, लभन्ते च प्रभूतमन्यदपि गवादिकं, एवं विनेयानामपि विनयादिक कुर्वतां गुरुः प्रसन्नो विद्या ददाति नान्यथा। भेरीदृष्टान्तः प्राग्वत्। आभीरमिथुनं घृतगन्त्री लात्वा विक्रयार्थं पत्तनेऽगात्, गन्त्र्या घृतभाजनान्युत्तारयतोस्तयोरेकस्मिन् भाजने प्रमादाद्भग्ने मिथः कलहं कुर्वतोरन्यदपि बहुघृतं छर्दितं, शेषं विक्रीयोत्सूरे गच्छन् मार्गे चौरैर्गन्त्री वृषभौ च हृतौ, एवं विनेयोऽन्यथा भणन्नधीयमानो वा परुषवाग्भिराचार्येण शिक्षितोऽधिक्षेपपुरस्सरं प्रतिवदति, यथा त्वयोक्तमहं शिक्षितः किमिदानीं निह्नुषे? इत्यादि, स न केवलमात्मानं संसारे पातयति, किन्त्वाचार्यमपि खरपरुषप्रत्युच्चारणादिना तीव्रतीव्रतरकोपानलज्वालनात्, स एकान्तेनाऽयोग्यः, प्रतिपक्षभावनायामपीदं कथानकं योज्यं, अन्याभीरयुग्मेन घृतघटे भग्ने मया भग्नः न त्वया भग्न इत्युक्तिः, त्वया सुष्ठु अर्पितो मया न सम्यग् गृहीतः एवं वदतोः प्रीतिः, एवं शिष्यो ब्रूते सुष्ठु न गृहीतं, गुरुर्ब्रूते—सुष्ठु न दत्तं, इत्थं ज्ञानवृद्धिः ॥१३९॥ इत्थमाचार्यशिष्य-

गाथा-१३९

दोषगुणकथनलक्षणो व्याख्यानविधिरुक्तः, सम्प्रति कृतमङ्गलोपचारो व्यावर्णितप्रसङ्गविस्तरः प्रदर्शितव्याख्यानिधिः, उपोद्घातं प्रतिपादयति—

उद्देसे १ निद्देसे २ निग्गमे ३ खित्त ४ काल ५ पुरिसे ६ अ ।
कारण ७ पच्चय ८ लक्खण ९ नए १० समोआरणा ११ ऽणुमए १२ ॥१४०॥
किं १३ कइविहं १४ कस्स १५ कहिं १६ केसु १७ कहं १८ केच्चिरं १९ हवइ कालं ।
कइ २० संतर २१ मविरहिअं २२ भवा २३ गरिस २४ फासण २५ निरूत्ती २६ ॥१४१॥

उद्देशो वाच्यः, एवं सर्वेषु क्रिया योज्या, उद्देशः—सामान्याभिधानमध्ययनमिति, निर्देशः—विशेषाभिधानं सामायिकमिति, निर्गमः—कुतोऽस्य सामायिकाध्ययनस्य निर्गमनं ?, क्षेत्रं कस्मिन् लोकक्षेत्रे इदं प्रादुर्भूतं ? कालः कस्मिन् काले ?, पुरुषश्च कुतः पुरुषादिदं प्रवृत्तं ? कारणं किं कारणं गौतमादयः श्रृण्वन्ति ?, प्रत्याययतीति प्रत्ययोऽन्तर्भूतण्यर्थादल्प्रत्ययः, केन प्रत्ययेन भगवतेदमुपदिष्टं ?, को वा गणधराणां श्रवणे प्रत्यय इति ?, लक्षण—श्रद्धानादि, नया—नैगमाद्याः, तेषां नयानां समवतरणं, क्व नयाः समवतरन्ति ?, अनुमतं कस्य व्यवहारादेर्नयस्य किं अनुमतं ?, सामायिकं किं ?, कतिविधं सामायिकं ?, कस्य सामायिकं ?, क्व क्षेत्रादौ सामायिकं ?, केषु द्रव्येषु सामायिकं ? कथ—केन प्रकारेण सामायिकमवाप्यते ? कियत्कालं स्यात् सामायिकं?,

कियन्तः प्रतिपद्यन्ते पूर्वप्रतिपन्ना वा ?, सान्तरं निरन्तरं वा, यदि सान्तरं तर्हि किमन्तरं स्यात् ?, अविरहेण कियन्तं कालं प्रतिपद्यन्ते ?, उत्कृष्टतः कियतो भवान् यावदवाप्यते सामायिकं ?, आकर्षणमासकर्षो, ग्रहणमिति भावः, तत्र कियन्त आकर्षा एकभवे अनेकभवेषु वा ?, स्पर्शना-कियत्क्षेत्रं सामायिकवन्तः स्पृशन्ति, निश्चिता उक्तिर्निरुक्तिश्चतुर्णां सामायिकानां वक्तव्या, एष उपोद्घातमूलद्वारगाथाद्वयसमासार्थः ॥१४०-१४१॥ अवयवार्थं तु प्रतिद्वारं निर्युक्तिकृदेव वक्ष्यति. उद्देशद्वारावयवार्थमाह—

नामं ठवणा दविए खेत्ते काले समास उद्देसे।
उद्देसुद्देसंमि अ भावंमि अ होइ अट्ठमओ ॥१४२॥

यस्य जीवादेरुद्देश इति नाम क्रियते स नाम्ना उद्देशः, उद्देश इत्यक्षरन्यासः स्थापनोद्देशः, द्रव्यविषय उद्देशो द्रव्योद्देशो, द्रव्यपतिरित्यादि, एवं क्षेत्रकालयोरपि, समासः-सङ्क्षेपस्तद्विषय उद्देशः समासोद्देशः, स चाङ्गश्रुतस्कन्धाध्ययनभेदात् त्रिधा, तत्राप्यङ्गसमासोद्देशो द्विधा, यथा इदमङ्गं अयं तदध्येता तदर्थज्ञो वा अङ्गीति एवं श्रुतस्कन्धसमासोद्देशाध्ययनसमासोद्देशावपि वाच्यौ, उद्देशोऽध्ययनविशेषस्तस्योद्देश उद्देशोद्देशः, यथाऽयमुद्देश इति उद्देशाध्ययनादुद्देशार्थज्ञानाद्वाऽयमुद्देशवानिति, भावोद्देशोऽयं भाव इत्यादि ॥१४२॥ अथोद्देशव्याख्यानेन निर्देशाख्यद्वितीयद्वारमाह—

एमेव य निद्देसो अट्ठविहो सोऽवि होइ णायव्वो ।
अविसेसिअमुद्देसो विसेसिओ होइ निद्देसो ॥१४३॥

यथाऽष्टविध उद्देश उक्तः, एवमेव च निर्देशोऽष्टविध एव भवति ज्ञातव्यः, किन्त्वविशेषितः सामान्यनामस्थापनादिगोचर उद्देशः, विशेषतस्तु नामादिविषयो भवति निर्देशः, यथा नामनिर्देशो जिनभद्र इत्याद्यभिधानं, स्थापनाविशेषाभिधानं स्थापनानिर्देशः, विशेषेण द्रव्याभिधानं द्रव्यनिर्देशो यथाऽयं गोरित्यादि, एवं क्षेत्रनिर्देशो भरतमित्यादि, कालनिर्देशः समय इत्यादि, समासनिर्देश आचाराङ्गं आवश्यकश्रुतस्कन्धः सामायिकं वेति, उद्देशनिर्देशः शस्त्रपरिज्ञादेराद्यो द्वितीयो वा, भावनिर्देश औदयिक इत्यादि, इह समासोद्देशनिर्देशाभ्यामधिकारः, कथं ? अध्ययनमिति समासोद्देशः सामायिकं इति समासनिर्देशः, इदं च सामायिकं नपुंसकम्-अस्य च निर्देष्टा त्रिविधः, स्त्री पुमान् नपुंसकं च ॥१४३॥ तत्र को नयः किं निर्देशमिच्छतीत्यमुमर्थमाह—

दुविहंपि णेगमणओ णिद्देसं संगहो य ववहारो ।
निद्देसगमुज्जुसुओ उभयसमित्थं च सद्दस्स ॥१४४॥

द्विविधमपि निर्देश्यवशान्निर्देशकवशाच्च नैगमनयो निर्देशमिच्छतीति क्रियाध्याहारः, कुतः ?, लोकसंव्यवहारप्रवणत्वान्नैकगमत्वाच्चास्य, लोके चोभयथा निर्देशप्रवृत्तिरुपलभ्यते, निर्देश्यवशाद्यथा वासवदत्ता प्रिय—

दर्शना इत्यादि, निर्देशकवशाच्च यथा मनुना प्रोक्तो ग्रन्थो मनुः, लोकोत्तरेऽपि निर्देशवशाद्यथा षड्जीवनिका, निर्देशकवशाज्जिनवचनं कापिलीयमित्यादि, एवं सामायिकमर्थरूपं रूढितो नपुंसकमितिकृत्वा नैगमस्य निर्देश्यवशान्नपुंसकनिर्देश एव, तथा सामायिकवतः स्त्रीपुंनपुंसकलिङ्गत्वात्तत्परिणामानन्यत्वाच्च सामायिकस्यार्थरूपस्य स्त्रीपुंनपुंसकलिङ्गत्वाविरोधमपि मन्यत नैगमः, तथा निर्दिष्टं वस्त्वङ्गीकृत्य सङ्ग्रहो व्यवहारश्च निर्देशमिच्छतीति वाक्यशेषः, अत्र भावना—वचनं ह्यर्थप्रकाशकमेवोपजायते प्रदीपवद्यथा हि प्रदीपः प्रकाश्यं प्रकाशयन्नेवात्मरूपं प्रतिपद्यते, एवं ध्वनिरपि अर्थं प्रतिपादयन्नेवात्मरूपं प्रतिपद्यमानः अर्थादात्मलाभं लभते इति व्यवह्रियते, तस्मान्निर्दिष्टवशान्निर्देशप्रवृत्तिः, ततश्च सामायिकमर्थरूपं रूढितो नपुंसकमतस्तदङ्गीकृत्य सङ्ग्रहो व्यवहारश्च नपुंसकं निर्देशमिच्छति, अथवा सामायिकवतस्त्रिलिङ्गत्वात्तत्परिणामानन्यत्वाच्च सामायिकार्थस्य त्रिलिङ्गतामपि मन्यते, तथा निर्देशकसत्त्वमङ्गीकृत्य सामायिकनिर्देशमृजुसूत्रो मन्यते वचनस्य वक्तुराधीनत्वात्तत्पर्यायत्वात्तद्भावभावित्वाच्च, ततश्च यदा पुरुषो निर्देष्टा तदा पुंल्लिङ्गता, एवं स्त्रीनपुंसकयोजनापि कार्या, तथा उभयसदृशं—निर्देश्य निर्देश्यकसदृश समानलिङ्गमेव वस्त्वङ्गीकृत्य शब्दस्य निर्देशप्रवृत्तिरिति वाक्यशेषः, अयमर्थः- सउपयुक्ता हि निर्देष्टा निर्देशादभिन्न एव, तदुपयोगानन्यत्वात्, ततश्च पुंसः पुमांसमभिदधतः पुंनिर्देश एव, एवं स्त्रियाः स्त्रियं प्रतिपादयन्त्याः स्त्रीनिर्देश एव, क्लीबस्य क्लीबमभिदधानस्य क्लीबनिर्देश एव, यदा तु पुमान् स्त्रियमभिधत्ते तदा स्त्रिया उपयोगानन्यत्वात् स्त्रीरूप एवासौ, निर्देश्यनिर्देशकयोः समानलिङ्गतैव, एवं सर्वत्र योज्या,

असमानलिङ्गनिर्देशोऽस्यावस्त्वेव, यदा पुमान् पुमांसं स्त्रियं चाह कास्तस्य दुरुपता? स्त्रीविज्ञानोपयोगभेदाभेदविकल्पद्वारेण पुरुषस्त्रीत्वापत्तेः, अन्यथा वस्त्वभावप्रसङ्गात्, तस्मादुपयुक्तो यमर्थमाह स तद्विज्ञानानन्यत्वात्तन्मय एव, तन्मयत्वाच्च तत्समानलिङ्गनिर्देशः, ततश्च सामायिकवक्ता तदुपयोगानन्यत्वात्सामायिकं प्रतिपादयन्नात्मानमेवाह, यतस्तस्मात्तस्य समानलिङ्गाभिधान एवासौ, रूढितश्च सामायिकार्थरूपस्य नपुंसकत्वात्स्त्रियः पुंसो नपुंसकस्य वा प्रतिपादयतः सामायिकं नपुंसकलिङ्गनिर्देश एव, अमूनि च सर्वनयमतानि समुदितानि प्रमाणं ॥१४४॥ निर्गमरूपं तृतीयद्वारमाह—

नामं ठवणा दविए खित्ते काले तहेव भावे अ ।
एसो उ निग्गमस्स णिक्खेवो छव्विहो होइ ॥१४५॥

द्रव्यनिर्गमः सचित्ताचित्तमिश्रभेदभिन्नः, तत्र सचित्तात्सचित्तस्य यथा भूमेरङ्कुरस्य, मिश्रस्य यथा पतङ्गस्य, अचित्तस्य यथा वाष्पस्य, तथा मिश्रात्सचेतनस्य यथा देहात्कृमिकस्य, मिश्रस्य यथा स्त्रीदेहाद् गर्भस्य, अचित्तस्य यथा देहाद्विष्ठायाः, अचित्तात्सचित्तस्य यथा काष्ठात्कृमिकस्य, मिश्रस्य यथा काष्ठाद् घुणकस्य, अचित्तस्य यथा काष्ठाद् घुणचूर्णस्य, कालनिर्गमः कालो ह्यमूर्त्तः, तस्य तथाप्युपचारतो वसन्तस्य निर्गम इत्यादि भाव निर्गमः पुद्गलाद्वर्णादिनिर्गमो, जीवात् क्रोधादि निर्गमः, तयोर्वा पुद्गलजीवयोर्वर्णविशेषः

क्रोधादिभ्यो निर्गमः, इह च प्रशस्तभावनिर्गममात्रेणाप्रशस्तभावापगमेन वाऽधिकारः, शेषैरपि तदङ्गत्वात्, इह च द्रव्यं भगवान् वर्द्धमानः, क्षेत्रं महासेनवनं, कालः प्रथमपौरुषीरूपः, भावश्च भावपुरुषो वर्द्धमानरूपः, एतानि सामायिकरूपप्रशस्तभावनिर्गमाङ्गानि द्रष्टव्यानि ॥१४५॥ तच्च सर्वं महावीरलक्षणद्रव्याधीनं अतस्तस्यैव प्रथमतो मिथ्यात्वादिभ्यो निर्गममभिधित्सुराह—

जह मिच्छत्ततमाओ विणिग्गओ जह य केवलं पत्तो ।
जह य पयासिअमेयं समाइअं तह पवक्खामि ॥

इयं गाथाऽन्यकर्तृकी वृत्तावव्याख्याता च ।

गाथा १४६

पंथं किर देसित्ता साहूणं अडविविप्पणट्ठाणं ।
सम्मत्तपढमलंभो बोद्धव्वो वद्धमाणस्स ॥१४६॥

पन्थानं किलेत्याप्तवादे देशयित्वा—कथयित्वा साधुभ्यः 'अडवित्ति' सप्तम्या लोपः अटव्यां पथो विप्रनष्टेभ्यः—परिभ्रष्टेभ्यः, पुनस्तेभ्य एव देशनां श्रुत्वा सम्यक्त्वं प्राप्तं, एवं सम्यक्त्वप्रथमलाभो बोद्धव्यो वर्द्धमानस्य, भावार्थं कथानकात् ज्ञेयः ॥१४६॥ एतदेव दर्शयन् गाथाद्वयमन्तर्भाष्यकृदाह—

अवरविदेहे गामस्स चिंतओ रायदारुवणगमणं ।
साहूभिक्खनिमित्तं सत्थाहीणे तहिं पासे ॥१॥ (भा.)
दाणन्न पंथनयणं अणुकंप गुरू कहण सम्मत्तं ।
सोहम्मे उववण्णो पलियाउ सुरो महिड्ढीओ ॥२॥ (भा.)

अपरे विदेहे ग्रामस्य चिन्तकः, 'रायदारुवणगमणं'ति अत्र निमित्तशब्दलोपात्तच्छब्दलोपो द्रष्टव्यः, राज-दारुनिमिमित्तं तस्य वनगमन, स साधून् भिक्षानिमितं सार्थाद्भ्रष्टान् तत्र दृष्टवान, परमभक्त्या दानमन्नपानस्य नयनं-प्रापण पथि, तदनन्तरमनुकम्पया गुरोर्धर्मकथनं, ततः सम्यक्त्वप्राप्तिः, तत्प्रभावान्मृत्वा सौधर्मे उत्पन्नः, पल्योपमायुः सुरो महर्द्धिकः ॥भा. १-२॥

लद्धूण य सम्मत्तं अणुकंपाए उ सो सुविहियाणं ।
भासुरवरबोंदिधरो देवो वेमाणिओ जाओ ॥१४७॥
चइऊण देवलोगा इह चेव य भारहंमि वासंमि ।
इक्खागकुले जाओ उसभसुअसुओ मरीइत्ति ॥१४८॥

स ग्रामचिन्तकः सुविहितानामनुकम्पया–परमभक्त्या तेभ्यः सम्यक्त्वं लब्ध्वा च भास्वरां–दीप्तिमती वरां–प्रधानां बोन्दी–तनुं धारयति भास्वरवरबोन्दिधरः देवो वैमानिको जात इति निर्युक्तिगाथार्थः ॥१४७॥

देवलोकात्स्वायुः क्षये च्युत्वा इहैव भारतवर्षे इक्ष्वाकुकुले जातः–उत्पन्नः ऋषभसुतसुतो मरीचिरिति नाम्ना, सामान्येन ऋषभपौत्रः ॥१४८॥ यत एवमतः—

इक्खागकुले जाओ इक्खागकुलस्स होइ उप्पत्ती ।
कुलगरवंसेऽईए भरहस्स सुओ मरीइत्ति ॥१४९॥

इक्ष्वाकूणां कुलं इक्ष्वाकुकुलं तस्मिन् जातः–उत्पन्नः भरतस्य सुतो मरीचिरिति योगः, पूर्वं सामान्ये ऋषभपौत्रत्वाभिधाने सतीदं विशेषाभिधानमदुष्टमेव, स च कुलकरा वक्ष्यमाणास्तेषां वंशः–प्रवाहस्तस्मिन्नतीते–अतिक्रान्ते जातः यत एवं तत इक्ष्वाकुकुलस्य भवति उत्पत्तिर्वाच्येति शेषः शेऽतत्र कुलकरवंशऽतीते इत्युक्तम् ॥१४९॥ अतः प्रथमं कुलकराणामेव यस्मिन् काले क्षेत्रे च प्रभवस्तदाह–

ओसप्पिणी इमीसे तइयाएँ समाएँ पच्छिमे भागे ।
पलिओवमट्ठभाए सेसंमि उ कुलगरुप्पत्ती ॥१५०॥

अस्यामवसर्पिण्यां वर्त्तमानायां या तृतीयसमा—सुषमदुष्षमाभिधाना तस्यां यः पश्चिमभागस्तस्मिन् पल्योपमाष्टभागे शेषे तिष्ठति सति कुलकरोत्पत्तिरभूदिति वाक्यशेषः ॥१५०॥ कुत्रक्षेत्रे इत्याह—

अद्धभरहमज्झिल्लुतिभागे गंगासिंधुमज्झंमि ।
इत्थ बहुमज्झदेसे उप्पण्णा कुलगरा सत्त ॥१५१॥

अद्धभरतमध्यत्रिभागे गङ्गासिन्धुमध्येऽत्र बहुमध्यदेशे, नतु पर्यन्तेषु, वैताढयपर्वतादारतो ग्राह्यमर्द्धभरतम् ॥१५१॥ पुव्वभवकुलगराणं उसमजिणिंदस्स भरहरण्णो अ । इक्खागकुलुप्पत्ती णेयव्वा आणुपुव्वीए ॥१॥ इयं गाथाऽन्यकर्तृकी अव्याख्याता च–

पुव्वभवजम्मनामं प्रमाणं संघयणमेव संठाणं ।
वण्णित्थियाउ भागा भवणोवाओ य णीइ य ॥१५२॥

कुलकराणां पूर्वभवा वक्तव्याः, जन्म नाम प्रमाणानि संहननं च, एवः पूरणार्थः. वर्णाः स्त्रियः आयुः भागाः कस्मिन् वयोभागे कुलकरत्वं जातं ?, भवनेषूपपातो भवनोपपातश्च, भवनग्रहणं भवनपति-निकायेषु उपपातो, नान्यत्रेति दर्शनार्थं, नीतिश्च—हक्कारादिः ॥१५२॥ तत्र प्रथमद्वारमाह—

अवरविदेहे दो वणिय वयंसा माइ उज्जुए चेव ।
कालगया इह भरहे हत्थी मणुओ अ आयाया ॥१५३॥
दट्ठु सिणेहकरणं गयमारुहणं च नामणिप्फत्ती ।
परिहाणि गेहि कलहो सामत्थण विन्नवण हत्ति ॥१५४॥

अपरविदेहे द्वौ वणिग्वयस्यावभूतां, एको मायी अपरश्च ऋजुरेव, तौ कालगताविह इह भरते आयाता, मायी हस्ती जातः, इतरा :मनुष्यश्च, हस्ती मनुष्यश्चायातावित्येतेन जन्मद्वारं प्रतिपादितं ज्ञेयं, दट्ठुं—दृष्ट्वा परस्परस्नेहकरणं गजारोहणं च, नामनिर्वृत्तिः, विमलं वाहनं—हस्तिलक्षणमस्य जातमिति विमलवाहन इति, गच्छता च कालेन कल्पद्रुपाणां परिहाणिः, ततः प्रभूता—प्रभूततरागृद्धिः, ततः कलहः, 'सामत्थण'त्ति देशी—वचनतः पर्यालोचामुच्यते, ततो विमलवाहतस्य विज्ञापयामास, तैरपि अधिपति चक्रे, स च तेषां दण्डं चकार—'हा' इति, ततो हकार नीतिप्रवृत्तिः, स च जातजातिस्मृतिः, तस्य चन्द्रयशाः प्रिया, तयोर्युग्मं जातं एवं क्रमेणैकस्मिन् वंशे सप्तकुलकरा उत्पन्नाः, पूर्वभवाश्च कुलकराणां प्रथमानुयोगतो ज्ञेयाः, जन्म पुनरिहैव सर्वेषां द्रष्टव्यं, गतं जन्मद्वारम् ॥१५३—१५४॥ अथनामद्वारमाह—

पढमित्थ विमलवाहण चक्खुम जसमं चउत्थमभिचंदे ।
तत्तो अ पसेणइए मरुदेवे चेव नाभी य ॥१५५॥

प्रथमोऽत्र विमलवाहनः. १, चक्षुष्मान् २, यशस्वी ३, चतुर्थोऽभिचन्द्रः ४, पञ्चमः प्रसेनजित् ५, षष्ठो मरुदेवः ६, सप्तमो नाभिरिति ७ ॥१५५। अथ प्रमाणद्वारार्थमाह—

णव धणुसया य पढमो अट्ठ य सत्तद्धसत्तमाइं च ।
छच्चेव अद्धछट्ठा पंचसया पण्णवीसं तु ॥१५६॥

नवधनुः शतानि प्रथमः, अष्टौ च २, सप्त ३, अर्द्धसप्तमानि च ४. षडेव ५, अर्द्धषष्ठानि ६, सर्वत्र शतशब्दो योज्यः, पञ्चशतानि पञ्चविंशतिं च ७, अन्येऽन्त्यपादमेवं पठन्ति—पञ्चशतानि पञ्चविंशत्यधिकानि. ॥१५६॥ अथ संहननसस्थाने आह—

वज्जरिसहसंघयणा समचउरंसा य हुंति संठाणे ।
वण्णंपि य वुच्छामि पत्तेयं जस्स जो आसी ॥१५७॥

वज्रर्षभसंहननाः सर्व एव समचतुरस्राश्च भवन्ति संस्थानविषये निरुप्यमाणे, अथ वर्णद्वारसंबन्धमाह— वर्णमपि च वक्ष्ये प्रत्येकं यस्य य आसीत् ॥१५७॥

चक्खुम जसमं य पसेणइअं एए पिअंगुवण्णाभा ।
अभिचंदो ससिगोरो निम्मलकणगप्पभा सेसा ॥१५८॥

चक्षुष्मान् यशस्वी च प्रसेनजिच्च एते प्रियङ्गुवर्णाभाः, नीलवर्णा इत्यर्थः, अभिचन्द्रः शशिवद्गौरः, निर्मलकनकाभाः शेषास्त्रयः ॥१५८॥ अथ स्त्रीद्वारमाह—

चंदजसचंदकंता सुरूव पडिरूव चक्खुकंता य ।
सिरिकंता मरुदेवी कुलगरपत्तीणनामाइं ॥१५९॥

चन्द्रयशा १ चन्द्रकान्ता २ सुरुपा ३ प्रतिरुपा ४ चक्षुःकान्ता च ५ श्रीकान्ता ६ मरुदेवी ७, कुलकरपत्नीनां नामानि ॥१५९॥

संघयणं संठाणं उच्चत्तं चेव कुलगरेहि समं ।
वण्णेण एगवण्णा रुव्वाओ पियंगुवण्णाओ ॥१६०॥

सहननं संस्थानमुच्चैस्त्वं चैव कुलकरैरात्मीयैः समं—अनुरूपं आसां कुलकरस्त्रीणां, किन्तु प्रमाणेनेपन्न्यूना इति सम्प्रदायः, तथापीपन्न्यूनत्वान्न भेदाभिधानं, वर्णेनैकवर्णाः सर्वाः प्रियङ्गुवर्णाः ॥१६०॥ अथायुर्द्वारमाह—

पलिओवमदसभाए पढमस्साउं तओ असंखिज्जा ।
ते आणुपुव्विहीणा पुव्वा नाभिस्स संखेज्जा ॥१६१॥

पल्योपमस्य दशभागः प्रथमविमलवाहनस्यायुः, ततोऽन्येषां चक्षुष्मदादीनामसंख्येयानि पूर्वाणीति योगः, तान्येवानुपूर्व्या अनुक्रमेण हीनानि, नाभेः सङ्ख्येयान्यायुष्कं, अन्ये तु व्याचक्षते–पल्योपमदशभागः प्रथमस्यायुष्कं, ततो द्वितीयस्यासङ्ख्येयाः इति असंख्येयताः पल्योपमासंख्येयभागा इति वाक्यशेषः, ते एवानुपूर्व्या हीनाः शेषाणामायुः तावद्यावत्पूर्वाणि नाभेः सङ्ख्येयानीति, अविरुद्धा चेयं व्याख्या, अपरे व्याचक्षते–प्रथमस्य प्राग्वत, ततः शेषाणामसङ्ख्येया इति समुदितानां पल्योपमासङ्ख्येयभागाः, किमुक्तं स्यात् ? द्वितीयस्य पल्योपमासङ्ख्येयभागः, शेषाणां तत एवासङ्ख्येयभागोऽसंख्येयभागः पात्यते तावद्यावन्नाभेरसंख्येयानि पूर्वाणि, इदं पुनरपव्याख्यानं, कुतः ? पञ्चानामसंख्येयभागानां पल्योपमचत्वारिंशत्तमसंख्यभागानुपपतेः, कथ ? पल्योपम विंशतिर्भागाः क्रियन्ते, तदष्टमागे कुलकरोत्पत्तिः, प्रथमस्य दशभाग आयुः शेषाणा पञ्चानामधरूपात् चत्वारिंशत्तमभागाः दश रूयातोऽसंख्यातो भागः आयुस्तथा तदर्द्धं किञ्चिन्न्यूनं स चत्वारिंशत्तमो भागोऽवतिष्ठते, यतः कृतविंशतिभागपल्योपमस्याष्टमागे इदं स्यात्, ततोऽपि दशभागे दीदावायतौ, गता अर्धादसंख्याताः पञ्चभागाः, यदर्धं किञ्चिन्न्यूनं स चत्वारिंशत्तमो भागोऽवतिष्ठते स च सङ्ख्ये-

यतमस्ततश्च कालो न गच्छति, आह—अत एव नाभेरसंख्येयानि पूर्वाण्यायुष्कमुक्तमिति उच्यते, इदमयुक्तं चैतत् मरुदेव्याः संख्येयवर्षायुष्कत्वात् नहि केवलज्ञानमसंख्येयवर्षायुषां स्याद्, अतो नाभेरपि संख्येयवर्षायुष्कत्वं ॥१६१॥ यत आह—

जं चेव आउयं कुलगरा तंणं चेव होइ तासिंपि ।
जं पढमगस्स आउं तावइयं चेव हत्थिस्स ॥१६२॥

यदेवायुः कुलकराणां प्रागुक्तं तदेव तत्प्रमाणमित्यर्थः, तासामपि—कुलकरांगनानां, यत्तु प्रथमस्य कुलकरस्यायुः तावदेव भवति हस्तिनः, एवं शेषकुलकरहस्तीनामपि कुलकरतुल्यं द्रष्टव्यम् ॥१६२॥ अथ भागद्वारमाह—

जं जस्स आउयं खलु तं दसभागे समं विभइऊणं ॥
मज्झिल्लट्ठतिभागे कुलगरकालं वियाणाहि ॥ १६३ ॥

यद्यस्यायुष्कं खलु तद्दशभागान् समं विभज्य मध्यमेऽष्टभागात्मके त्रिभागे कुलकारकालं विजानीहि ॥१६३॥ अमुमेवमर्थं प्रगटयति

पढमो य कुमारत्ते भागो चरमो य वुड्ढभावंमि ।
ते पयणुपिज्जदोसा सव्वे देवेसु उववण्णा ॥ १६४ ॥

तेषां दशानां भागानां मध्ये प्रथमश्च कुमारत्वे गृह्यते भागः, चरमश्च वृद्धभावे, शेषा मध्यमा अष्टौ भागाः, कुलकरकालः, अत एवोक्त-मध्यमाष्टत्रिभागे इति मध्यमाश्च तेऽष्टौ च मध्यमाष्टौ ते एव त्रिभागस्तस्मिन्, अथोपपातद्वारमाह-ते प्रतनुरागद्वेषाः, प्रेम-रागः सर्वे विमलवाहनादयः ॥१६४॥ केषु देवाष्वित्याह—

दो चेव सुवण्णेसुं उदहिकुमारेसु हुंति दो चेव ।
दो दीवकुमारेसुं एगो नागेसु उववण्णो ॥ १६५ ॥

द्वौ एव च सुपर्णकुमारेषु उदधिकुमारेषु देवेषु द्वावेव च भवतः, द्वौ द्वीपकुमारेषु, एको नागकुमारेषूपपन्नः ॥१६५॥ यथासंख्यं हस्तिनां स्त्रीणा चोपपातमाह—

हत्थी छच्चित्थीओ नागकुमारेसु हुंति उववण्णा ।
एगा सिद्धिं पत्ता मरुदेवी नाभिणो पत्ती ॥१६६॥

हस्तिनः सप्तापि षट् च स्त्रियो नागकुमारेषूपपन्नाः, अन्ये व्याचक्षते—हस्ती एकः षट् च स्त्रियो नागकुमारेषु, शेषैर्नाधिकार इति, एका सिद्धिं प्राप्ता मारुदेवी नाभेः पत्नी ॥१६६॥ अथ नीतिद्वारमाह—

हक्कारे मक्कारे धिक्कारे चेव दंडनीईओ ।
वुच्छं तासि विसेसं जहक्कमं आणुपुव्वीए ॥ १६७ ॥

हकारमकाधिकाराश्चैव दण्डनीतयो वर्तन्ते, वक्ष्ये तासां विशेषं यथाक्रमं—या यस्येति आनुपूर्व्या—परिपाट्या ॥१६७॥

पढमबीयाण पढमा तइयचउत्थाण अभिनवा बीया ।
पंचमछट्ठस्स य सत्तमस्स तइया अभिनवा उ ॥१६८ ॥

प्रथमद्वितीययोः कुलकरयोः प्रथमा हकाराख्या, तृतीयचतुर्थयोरभिनवा द्वितीया मकाराख्या, स्वल्पापराधे प्रथमा, महापराधे द्वितीया इति साऽभिनवा, पञ्चमषष्ठयोः सप्तमस्य च तृतीयाऽभिनवा तूत्कृष्टा, द्वितीया मध्यमा, आद्या जघन्या, तिस्रोऽपि लघुमध्यमोत्कृष्टापराधेषु ॥१६८॥

सेसा उ दंडनीई माणवगनिहीओ होति भरहस्स ।
उसभस्स गिहावासे असक्कओ आसि आहारो ॥१६९॥

शेषा तु दण्डनीतिः चारकच्छविच्छेदलक्षणा भरतस्य माणवकनिधेः सकाशाद्भवति, इयमत्र भावना— कोपाविष्करणे नरे इतः स्थानान्मा यासीरित्येव यत्परिभाषणं, यश्च मण्डलिबन्धो यथा नोऽस्मात्प्रदेशाद्गन्तव्यमित्येवरूपे द्वे दण्डनीती ऋषभस्वामिना प्रवर्तिते, वर्तमानक्रियाभिधानमिह क्षेत्रे सर्वावसर्पिणीस्थितिदर्शनार्थं, अन्यास्वप्यतीतास्वेष्यासु चाऽवसर्पिणीषु अयमेव न्यायः प्रायो नीत्युत्पादे, तस्य भरतस्य पितुरृषभस्य गृहवासे असंस्कृत आसीदाहारः, स्वभावसंपन्न इत्यर्थः, तस्य हि देवेन्द्रादेशाद्देवकुरूत्तरकुरुभ्यः स्वादूनि फलानि क्षीरोदकाचोदकमुपनीतवन्तः ॥१६९॥ इय मूलनिर्युक्तिगाथा एतामेव मूलभाष्कृद् व्याख्यानयन्नाह—

परिभासणा उ पढमा मंडलिबंधंमि होइ बीया उ ।
चारग छविछेआई भरहस्स चउव्विहो नीई ॥३ भा०॥

परिभाषणा प्रथमा, मण्डलिबन्धश्च—परितो रेखाकरणं भवति द्वितीया तु, एते द्वे प्रागुक्ते युगादिदेवप्रवर्तिते, तृतीया चारकलक्षणा भरतेन, माणवकनिधिं परिभाव्य प्रवर्तिता, चतुर्थी छविच्छेदा—हस्तपादनासिका-

गाथा-१६९

दिक्छेद आदिशब्दाच्छिरःकर्तनादिग्रहः, सापि एताश्चतस्रोऽपि यथाक्रममल्पगुरुगुरुतरगुरुतमापराधविषयाः, आद्ये नीती ऋषभनाथेनैवोत्पादिते. अन्ये तु माणवकनिधेरुत्पन्ने इति, भरतस्य चतुर्विधा नीतिरभूदित्यर्थः, हारिभद्रीयवृत्तौ तु चतुर्विधापि भरतेनैव प्रवर्तितेति ।भा०३॥ अथ प्राक् सूचितमिक्ष्वाकुवंशमाह—

नाभी विणीअभूमी मरुदेवी उत्तरा य साढा य ।
राया य वइरणाहो विमाणसव्वट्ठसिद्धाओ ॥१७०॥

इयं निर्युक्तिगाथा प्रभूतार्थवती, अस्यां च प्रतिपदं क्रियाध्याहारः कार्यः, नाभि कुलकरोऽभूत्, तस्य विनीता भूमी प्रायोऽवस्थानमासीत्. मरूदेवी तस्या भार्या, राजा च प्राग्भवे वैरनाभः सन् प्रव्रज्यां गृहीत्वा तीर्थकृन्नामकर्म बद्धवा मृत्वा सर्वार्थसिद्धिमवाप्य ततश्च्युत्वा तस्य मरुदेव्यास्तस्यां विनीताभूमौ ऋषभनाथः सञ्जातः, तस्योत्तराषाढानक्षत्रमासीत् ॥१७०॥ अधुना यः प्राग्भवे वज्रनाभो यथा च तेन सम्यक्त्वमाप्तं यावतो वा भवान् प्राप्तसम्यक्त्वः संसारं पर्यटितो तथा च तेन तीर्थकृन्नामगोत्रं बद्धमित्यमुमेवार्थमाह—

धणसत्थवाह घोसण जइगमण अडविवासठाणं च ।
बहुवोलीणे वासे चिंता घयदाणमासि तया ॥१७१॥

इयं गाथाऽन्यकर्तृका, आद्ये भवे धनः सार्थवाहः, उत्तरकुरुषु मिथुनकः, सौधर्मे सुरः, गन्धिलावती-विजये महाबलो राजा, ईशाने ललिताङ्गो देवः, महाविदेहे वज्रजङ्घः, उत्तरकुरुषु मिथुनकः, सौधर्मे देवः, विदेहेषु वैद्यः, अच्युते देवः, विदेहे वज्रनाभश्चक्री, सर्वार्थसिद्धिविमाने देवः, ऋषभश्च, एतानेव क्रमेण विवरीपुराह ॥१७१॥ धणसत्थवाह० धनसार्थवाह आसीत्, वसन्तपुरं प्रतिचिचलिपुर्घोषणां कृतवान्, तेन सह यतीनां गमनमभूत्, अटव्यां वासस्थानं च, बहुव्युत्क्रान्ते वर्षाकाले धनस्य चिन्ताऽभूत्, घृतदानमासीत्तदा ।

उत्तरकुरु सोहम्मे महाविदेहे महब्बलो राया ।
ईसाणे ललियंगो महाविदेहे वइरजंघो ॥१॥ (प्रक्षिप्ता)

इयं गाथाऽन्यकर्तृकी, उत्तरकुरुषु मिथुनकं, सौधर्मे देवः, महाविदेहे महाबलो राजा, विदेहे वज्रजङ्घः ॥१७१॥

उत्तरकुरु सोहम्मे विदेहि तेगिच्छियस्स तत्थ सुओ ।
रायसुयसेट्ठिमच्चासत्थाहसुया वयंसा से ॥१७२॥

उत्तरकुरुषु मिथुनकः, सौधर्मे देवः, विदेहे चिकित्सकसुतः, तत्र से—तस्य राजसुतश्रेष्ठ्यमात्यसार्थवाहसुताश्चत्वारो वयस्याः, अयं भावः ॥१७२॥

विज्जसुअस्स य गेहे किमिकुट्ठोवद्दुअं जइं दट्ठुं ।
बिंति य ते विज्जसुयं करेहि एअस्स तेगिच्छं ॥१७३॥

तस्य वैद्यसुतस्य गेहे कृमिकुष्ठोपद्रुतं यतिं दृष्ट्वा वदन्ति, ते चत्वारोऽपि वयस्या वैद्यसुतं-कुरु अस्य चिकित्सामिति ॥१७३॥

तिल्लं तेगिच्छसुओ कंबलगं चंदणं च वाणियओ ।
दाउं अभिणिक्खंतो तेणेव भवेण अंतगडो ए ॥१७४॥

तैलं चिचिकित्सकसुतोऽदात्, कम्बलरत्नं गोशीर्षचन्दनं च तस्य न स्त इति, ते वयस्या द्रव्याणां लक्षं गृहीत्वा वणिग्विपणिं जग्मुः, तेन वणिजा संभ्रान्तेनोक्तं-किमेताभ्यां कार्यं ?, ते उचुः साधुचिकित्सार्थं, तेनोक्तं-मूल्येनालं, मुधैव गृहीत्वा यात, ममापि लाभो भवत्विति, संवेगमापन्नोऽभिनिष्क्रान्तः, तेनैव भवेनान्तकृत् सिद्धो जातः ॥१७४॥

साहुं तिगिच्छिऊणं सामण्णं देवलोगगमणं च ।
पुंडरगिणिए उ चुया तओ सुया वइरसेणस्स ॥१७५॥

गाथा-१७३
७४-७५

साधु चिकित्सयित्वा श्रामण्यं परिपाल्य पञ्चानामपि देवलोकगमनं च अच्युतकल्पे इत्यर्थः, तत
श्च्युताः पुण्डरीकिण्यां वज्रसेनस्य सुता अभवन् ॥१७५॥

पढमित्थ वइरणाभो वाहु सुवाहू य पीढमहपीढे ।
तेसिं पिआ तित्थअरो णिक्खंता तेऽवि तत्थेव ॥१७६॥

तत्र प्रथमो वैद्यसुतो वज्रनाभोऽभूत्, शे ास्तु राजश्रेष्ठयमात्यसार्थवाहसुताः क्रमेण बाहुसुबाहुपीठमहापाठा बभूवुः, तेषां पिता तीर्थकरो जातः, तेऽपि वज्रनाभादयः पश्चापि तत्रैव तीर्थकरपितुः समीपे निष्क्रान्ताः, ॥१७६॥

पढमो चउदसपुव्वी सेसा इक्कारसंगविउ चउरो ।
वीओ वेयावच्चं किइकम्मं तइओ कासी ॥१७७॥

प्रथमो वज्रनाभश्चतुर्दशपूर्वी जातः, शेषाश्चत्वारोऽप्येकादशाङ्गविदः, द्वितीयो बाहुर्वैयावृत्यं--भक्तपानादिनोपष्टम्भलक्षणं चक्रवर्तिभोगफलमकार्षीत्, तृतीयः सुबाहुः कृतिकर्म--साधुविश्रामणारूपं बाहुबलफलमकार्षीत् ॥१७७॥

भोगफलं वाहुवलं पसंसणा जिट्ठ इयर अचियत्तं ।
पढमो तित्थयरत्तं वीसहि ठाणेहि कासी य ॥१७८॥

भोगफलं बाहुबलमिति व्याख्यातमेव, प्रशंसनं गुरुणा क्रियते ज्येष्ठयोः, इतरयोः-कनिष्ठयोः पीठ-महापीठयोः 'अचिअत्त'ति गुरुषु प्रशंसां कुर्वत्सु मात्सर्यमभूत्, प्रथमस्तीर्थकरत्वं विंशत्या स्थानैरकार्षीत् ॥१७८॥ कानि पुनस्तानीत्याह—

अरिहंत सिद्ध पवयण गुरु थेर बहुस्सुए तवस्सीसुं ।
वच्छल्लया एएसिं अभिक्खनाणोवओगे य ॥१७९॥

अर्हन्तः सिद्धाश्च प्रतीताः, प्रवचनं—श्रुतज्ञानं तदुपयोगानन्यत्वात्सङ्घः, गुरुः धर्मोपदेशकः, स्थविरा· त्रिधा—वयःश्रुतपर्यायैः, तत्र वयसा षष्ठिवर्षप्रमाणाः, श्रुतेन समवायाङ्गधराः, पर्यायेण विंशतिवर्षव्रतपर्यायाः, बहु-श्रुतं येषां ते बहुश्रुताः, आपेक्षिकं बहुश्रुतत्वं एवमर्थेऽपि योज्यं, किन्तु श्रुतधरेभ्योऽर्थधराः प्रधानास्तेभ्योऽप्यु-भयधराः, विचित्रमनशनादिभेदभिन्नं तपो येषां ते तपस्विनः, सामान्यसाधवो वा, ततो द्वन्द्वः, वत्सलता च वत्सलभावः, सा चानुरागयथास्थितगुणोत्कीर्त्तनानुरूपोपचारलक्षणा तया, एतेषां अर्हदादीनामिति प्राक् षष्ठ्यर्थे सप्तमी, 'बहुस्सुए तवस्सीण वा' पाठान्तरं, तीर्थकरनामकर्म बध्यते इति शेषः, अभीक्ष्णं—अनवरतं ज्ञानोपयोगे च सति बध्यते ॥१७९॥

दंसण विणए आवस्सए सीलव्वए निरइआरो ।
खणलव तवच्चियाए वेयावच्चे समाही य ॥१८०॥

दर्शनं सम्यक्त्वं विनयो ज्ञानादिविनयो दशवैकालिकोक्तस्तयोर्निरतिचारस्तीर्थंकरकर्म्म बध्नाति, एवमग्रेऽपि, आवश्यकं—अवश्यकर्तव्यं संयमव्यापाररूपं प्रतिक्रमणादि तस्मिंश्च, शीलानि च व्रतानि च शीलव्रतं, शीलानि—उत्तरगुणा व्रतानि—मूलगुणास्तेषु वाऽनतिचारः, क्षणलवग्रहणं कालोपलक्षणं, क्षणलवादिषु संवेगभावनादितः, तपो बाह्याभ्यन्तरभेदभिन्नं तत्प्रवृत्तितः, त्यागो द्विधा—द्रव्यत्यागः—साधूनां भक्तपानादिदानं, भावत्यागः—क्रोधादीनां वा, यतिजनेभ्यो वितरणं, द्विविधस्यापि त्यागस्य प्रवृत्तितः, वैयावृत्त्यं-आचार्य-उपाध्यायस्थविरतपस्विग्लानशैक्षकसाधर्मिककुलगुणसङ्घभेदाद्दशधा, एकैकं त्रयोदशविधं भक्तपानासनानां दानं ३ उपकरणप्रत्युपेक्षा ४ पादप्रमार्जनं ५ वस्त्र ६ भेषजयोर्दानं ७ अध्वनि साहाय्यं ८ दुष्टस्तेनादिभ्यो रक्षणं ९ वसतौ प्रविशतां दण्डकग्रहणं १० कायिकमात्र ११ संज्ञामात्र १२ श्लेष्ममात्राणां समर्पणं १३, एवंविधे वैयावृत्ते सति बध्यते, समाधिश्च गुर्वादीनां कार्यकरणद्वारेण स्वस्थतापादनं तस्मिन् सति ॥१८०॥



अप्पुव्वनाणगहणे सुयभत्ती पवयणे पभावणया ।
एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥१८१॥

अपूर्वज्ञानस्य ग्रहणे सति श्रुतभक्तिर्विवक्षितकर्मबन्धहेतुः, प्रवचनप्रभावनता, सा च यथाशक्तिप्रवचनार्थोपदेशरूपा, त्वापि सङ्कटे महाप्रभावदर्शनेन ॥१८१॥

पुरिमेण पच्छिमेण य एए सव्वेऽवि फासिया ठाणा ।
मज्झिमएहिं जिणेहिं एक्कं दो तिण्णि सव्वे वा ॥१८२॥

पूर्वेण ऋषभेन पश्चिमेन वीरेण प्राग्भवे एतानि सर्वाण्यपि स्पृष्टानि—आसेवितानि, मध्यमैर्जिनैरेकं द्वे त्रीणि सर्वाणि वा ॥१८२॥

तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं ।
बज्झइ तं तु भगवओ तइयभवोसक्कइत्ता णं ॥१८३॥

चः—पुनरर्थे, ननु तत्पुनस्तीर्थंकरनामकर्म उदयं प्राप्तं कथं वेद्यते ?, एवं शिष्येण प्रश्ने सूरिराह—अग्लान्या-ग्लानिपरिहारेण धर्मदेशनादिभिः, अष्टमहाप्रातिहार्यादिरूपे सुरेन्द्रकृते पूजोपचारे सति, आदिशब्दाच्चतुस्त्रिंशताऽतिशयैः पञ्चत्रिंशता वाणीगुणैरित्यादिग्रहः, तत्तु तीर्थंकरकर्म भवतः—तीर्थकरभवात् प्रागवसर्प्य पश्चिमानुपूर्व्या यस्तृतीयभवस्तस्मिन् बध्यते—निकाच्यते, निकाचनारूपश्च बन्धस्तृतीयभवादारभ्य तावद्यावत्तीर्थंकरभवे अपूर्वकरणस्य सङ्ख्येयभागाः, तत ऊर्ध्वं बन्धव्यवच्छेदः, केवलिकाले तस्योदयः ॥१८३॥ तत्कस्यां गतौ बध्यते इत्याह—

नियमा मणुयगईयए इत्थी पुरिसेयरो य सुहलेसो ।
आसेवियबहुलेहिं वीसाए अण्णयरएहिं ॥१८४॥

नियमात्—नियमेन मनुजगतौ बध्यते, निकाचनारूपो बन्धोऽत्र ग्राह्यः स्त्रीपुरुष इतरो वा नपुंसकः, शुभलेश्याः विंशतेरन्यतरस्थानैः आसेवितबहुलैः बहुलं—अनेकैरासेवितैः, पूर्वापरनिपातः प्राकृतशैल्याः ॥१८४॥

उववाओ सव्वट्ठे सव्वेसिं पढमओ चुओ उसभो ।
रिक्खेण असाढाहिं असाढबहुले चउत्थीए ॥१८५॥

उपपातः सर्वार्थे सर्वेषां जातः, ततः आयुःक्षये प्रथमो—वज्रनाभश्च्युत ऋषभः—ऋक्षेण नक्षत्रेण आषाढाभिः—उत्तराषाढाभिः आषाढबहुलचतुर्थ्याम् ॥१८५॥ अथ तद्वक्तव्यतामभिधित्सुर्द्वारगाथामाह—

जम्मणे नाम वुड्ढी अ, जाईए सरणे इअ ।
वीवाहे अ अवच्चे अभिसेए रज्जसंगहे ॥१८६॥

जन्मविषयो विधिर्वाच्यः, नामविषयः, वृद्धिश्च वाच्या, जातिस्मरणे विवाहे च अपत्ये अभिषेके राज्यसङ्ग्रहे विधिर्वाच्यः ॥१८६॥ आद्यद्वारमाह—

चित्तबहुलट्ठमीए जाओ उसभो असाढणक्खत्ते ।
जम्मणमहो अ सव्वो णेयव्वो जाव घोसणयं ॥१८७॥

चैत्रबहुलाष्टम्यां जात ऋषभ उत्तराषाढनक्षत्रे, जन्ममहः सर्वोऽपि तावत् नेतव्यः-शिष्यबुद्धिं प्रापणीयो यावद् घोषणकं आभियोगिकैरिन्द्रकारितम् ॥१८७॥ अन्यकर्तृकी अव्याख्याता च—

संवट्ट मेह आयंसगा य भिंगार तालियंटा य।
चामर जोई रक्खं करेन्ति एयं कुमारीओ ॥१८८॥

संवर्तकवायुं विकुर्वन्ति, अष्टदिक्कुमार्यः सूतिकागृहात्सर्वतो योजनमानं यावत्तृणकचवरादिकं सर्वं परिक्षिपन्ति, अष्टौ मेघं विकुर्वन्ति, अष्टादर्शहस्ता आगच्छन्ति, अष्टभृङ्गारहस्ताः, अष्टतालवृन्तहस्ताः, अष्टचामरहस्ताः, चतस्रो ज्योतिरिति—दीपिकाहस्ताः, चतस्रो रक्षां कुर्वन्ति, चतुरङ्गुलवर्जनाभिं च कृन्तति, षट्पञ्चाशदपि चैताः स्वकृत्यानि कृत्वा गुणोत्कीर्तनं कुर्वन्ति, इयमपि च प्रक्षेपगाथा, हारिभद्रीयवृत्तौ चेयं निर्युक्तिगाथेति व्याख्याता, (अग्रे तत्प्रसंगे एतदतिदेशात् ॥१८८॥ गतं जन्मद्वारम् भगवतो नामनिबन्धनं चतुर्विंशतिस्तवे वक्ष्यते, इह वंशनामनिबन्धमाह —

देसूणगं च वरिसं सक्कागमणं च वंसठवणा य ।
आहारमंगुलीए ठवति देवा मणुण्णं तु ॥१८९॥

गाथा-१८८-८९

देशोनं च वर्ष भगवतो जातस्य यावदभूत् तावत् शक्रागमनं च जातं, तेन भगवतो वंशस्थापना च कृता, सोऽयमृषभो यस्य गृहवासेऽसंस्कृत आसीदाहारः, किञ्च सर्वे तीर्थकरा एव बालभावे वर्तमाना न स्तनोपयोगं कुर्वन्ति, किन्तु आहाराभिलापे सति स्वामेवाङ्गुलिं वदने प्रक्षिपन्ति, तस्यां चाङ्गुल्यां नानारससमायुक्तं मनोज्ञमाहारं देवाः स्थापयन्ति, अतिक्रान्तबालभावास्तु सर्वेऽप्यग्निप.कमाहारं गृह्णन्ति, ऋषभस्तु यावत्प्रव्रज्यां न प्रतिपन्नस्तावद्देवोपनीतम् ॥१८९॥ अथ प्रकृतमुच्यते—

सक्को वंसट्ठवणे इक्खु अगू तेण हुंति इक्खागा ।
जं च जहा जंमि वए जोगं कासी यतं सव्वं ॥१९०॥

शक्रो वंशस्थापने प्रस्तुते इक्षुमादाय समागतः, भगवता च करे प्रसारिते सति आह—भगवन् किमिक्षुं अकुः—भक्षयसि?' अकुशब्दो भक्षणेऽस्ति, भगवता च जगृहे, तेन भवन्ति इक्ष्वाका—इक्षुभोजिनः, ऋषभदेववंशजा इक्ष्वाका इत्यर्थः, एवं यच्च वस्तु यथा येन प्रकारेण यस्मिन् वयसि योग्यं तच्छक्रः कृतवान्, अत्र पश्चार्द्धं पाठान्तरं वा 'तालफलाहयभगिणि होही पत्तीत्ति सारवणा' इति, तालफलेनाहतस्य पुरुषस्य भगिनी, सा मिथुनकैर्नाभेरन्तं आनीता, तेन च भविष्यति पत्नी ऋषभस्येति कृत्वा तस्याः 'सारवण'त्ति—सङ्गोपना कृता ॥१९०॥ अथ वृद्धिद्वारमाह—

गाथा—१८९—९०

अह वड्ढइ सो भयवं दियलोयचुओ अणोवमसिरीओ ।
देवगणसंपरिवुडो नंदाइ सुमंगला सइओ ॥१९१॥

अथ वर्द्धते स भगवान् द्युलोकच्युतः सन् अनुपमश्रीको—निरूपमदेहकान्तिकलितः देवगणसम्परिवृतः नन्दया सुमङ्गलया च सहित इति. ते अपि वर्द्धते इत्यर्थः ॥१९१॥

असिअसिरओ सुनयणो बिंबुट्ठो धवलदंतपंत्तीओ ।
वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो ॥१९२॥

असितसिरोजः सुनयनः विम्बं--गोल्हाफलं तच्चरक्तं स्यात्तद्वदौष्ठौ यस्य सः, धवलदन्तपङ्क्तिकः, वरपद्मगर्भ इव गौरो—निर्मलः, फुल्लोत्पलगन्धवन्निःश्वासो यस्य स ॥१९२॥ जतिस्मरणद्वारमाह—

जाइस्सरो अ भयवं अप्परिवडिएहि तिहि उ नाणेहिं ।
कंतीहि य बुद्धीहि य अब्भहिओ तेहि मणुएहिं ॥१९३॥

जाति स्मरतीति जातिस्मरश्च भगवान् अप्रतिपतितैरेव त्रिभिर्मतिश्रुतावधिरूपैर्ज्ञानैः कान्त्या च बुद्धया च तेभ्यस्तकालभाविभ्यो मिथुनकमनुष्येभ्योऽभ्यधिकः ॥१९३॥ अथ विवाहद्वारमाह—

पढमो अकालमच्चू तहिं तालफलेण दारओ पहओ ।
कण्णा य कुलगरेणं सिट्ठे गहिआ उसहपत्ती ॥१९४॥

भगवतो देशोनवर्षकाले एव किञ्चिन्मिथुनकं सञ्जातापत्यं सत् तदपत्यमिथुनकं तालवृक्षस्याधो विमुच्य रिरंसया कदलीगृहादिक्रीडागृहमगमत् तस्माच्च तालवृक्षात् पवनप्रेरितं पक्वं तालफलमपतत्, तेन दारकोऽकाले मृतः एप प्रथमोऽवसर्पिण्यामकालमृत्युः, तदपि मिथुनकं तां दारिकां वर्द्धयित्वा प्रतनुकषायं मृत्वा सुरलोके समुत्पन्नं, तां चोत्कृष्टरूपां दृष्ट्वा मिथुनका नाभिकुलकराय न्यवेदयन्, शिष्टे च-कथिते कन्या ऋषभपत्नी भविष्यतीति कुलकरेण गृहीता ॥१९४॥

भोग.मत्थं नाउं वरकम्मं तस्स का॰ देविंदो ।
दुण्हं वरमहिलाणं वहुकम्मं कासि देवीओ ॥१९५॥

भोगसमयं ज्ञात्वा तस्य वरकर्म देवेन्द्रोऽकार्षीत्, द्वयोर्वरमहिलायोः—नन्दासुमङ्गलयोर्वधूकर्म देव्यो-देवेन्द्राणामहिष्योऽकार्षुः ॥१९५॥ अपत्यद्वारमाह—

छप्पुव्वसयसहस्सा पुव्विं जायस्स जिणवरिंदस्स ।
तो भरहबंभिसुंदरिबाहुबली चेव जायाइं ॥१९६॥

जातस्य जिनेन्द्रस्य पूर्वं षट्पूर्वशतसहस्राणि व्यतिक्रामन्, एतावत्यवसरे सुमङ्गलाया बाहुःपीठश्च भरतः-ब्राह्मीति मिथुनकं जातं, सुबाहुर्महापीठश्च सुनन्दाया बाहुबलिः सुन्दरीति मिथुनकं ॥१९६॥ अमुमेवार्थमाह मूलभाष्यकारः—

देवो सुमंगलाए भरहो बंभी य मिहुणयं जायं।
देवीइ सुनन्दाए बाहुबली सुंदरी चेव ॥४॥ (मू० भा०)

सुगमा ॥४॥

अउणापण्णं जुअले पुत्ताण सुमंगला पुणो पसवे।
नीईणमइक्कमणे निवेअणं उसभसामिस्स ॥१९७॥

एकोनपञ्चाशतं पुत्राणां युग्मानि सुमङ्गला पुनः प्रसूतवती, अत्रान्तरे प्रागुक्तानां हक्कारादिदण्डनीतीनां ते लोकाः प्रचुरतरकषायसम्भवादतिक्रमणं कृतवन्तः, ततश्च नीतिनामतिक्रमणे सति ते लोका अभ्यधिकज्ञानादि-गुणान्वितं भगवन्तं विज्ञाय निवेदनं—कथनमृषभस्वामिने कृतवन्त इत्यध्याहारः ॥१९७॥ निवेदिते सति भगवानाह—

राया करेइ दण्डं सिट्ठे ते बिंति अम्हवि स होउ।
मग्गह य कुलगरं सो अ बेइ उसभो य भे राया ॥१९८॥

नीत्यतिक्रमकारिणां राजा करोति दण्डं, स चामात्यारक्षकादिबलयुक्तः कृताभिषेकोऽनतिक्रमणीयाज्ञश्च भवति, एवं भगवता शिष्टे—कथिते सति ते मिथुनका ब्रुवते—अस्माकमपि राजा भवतु, वर्तमाननिर्देशः, खल्व-स्यामप्यवसर्पिण्यामपि अयमेव न्यायः प्राय इति प्रदर्शनार्थः, भगवानाह—यद्येवं तर्हि मार्गयत—याचध्व कुलकरं, तैर्याचितो नाभिकुलकरं, स च ब्रूते अहं महान् जातः, ऋषभो भवतां राजा, ततश्च ते मिथुनका राज्याभिषे-कार्थमुदकानयनाय पद्मिनीसरो जग्मुः, अत्रान्तरे आसनप्रकम्पादवधिना ज्ञात्वा शक्रः समागत्य राज्याभिषेकं कृतवान् ॥१९८॥ अमुमेवार्थमुपसंहरन् अनुक्तं च प्रतिपादयन्नाह—

आभोएउं सक्को उवागओ तस्स कुणइ अभिसेअं।
मउडाइअलंकारं नरिंदजोग्गं च से कुणइ ॥१९९॥

आभोग्य'—अवधिना विज्ञाय उपागतस्तस्य भगवतः करोति राज्याभिषेकं मुकुटाद्यलङ्कारं च, आदिशब्दात् कटककुण्डलकेयूरादिग्रहः, चशब्दस्य व्यवहितसम्बन्धः, से—तस्य करोति, अत्रापि वर्तमाननिर्देशः प्राग्वत्, अत्रान्तरे मिथुनकनराः समागताः ॥१९९॥ एतदेव आह—

भिसिणीपत्तेहिअरे उदयं घित्तुं छुहंति पाएसु ।
साहु विणीआ पुरिसा विणीअनयरी अह निविट्ठा ॥२००॥

बिसिनीपत्रैः—पद्मिनीपत्रैः इतरे मिथुनकनराः उदकं गृहीत्वा क्षिपन्ति 'भगवत्पादयोरुपरि, तानेवंविध-क्रियोपेतान् दृष्ट्वा देवराजोऽचिन्तयत्—साधु विनीताः पुरुषा एते इति, वैश्रमणमाज्ञापितवान्—इह द्वादशयोजन-दीर्घां नवयोजनविष्कम्भां विनीतानगरीं निष्पादयेति, तेन शक्रादेशादथानन्तरं दिव्यभवनप्राकारमालोपशोभिता विनीताभिधाना नगरी निविष्टा, अन्तर्भूतण्यर्थत्वान्निवेशितेत्यर्थः ॥२००॥ गतमभिषेकद्वारं, अथ राज्यसङ्ग्रहद्वारमाह—

आसा हत्थी गावो गहिआइं रज्जसंगहनिमित्तं ।
घित्तूण एवमाई चउव्विहं संगहं कुणइ ॥२०१॥

अश्वा हस्तिनो गावः एतानि चतुष्पदानि भगवता तदा गृहीतानि, राज्यविषयः सङ्ग्रहो राज्यसङ्ग्रहस्त-न्निमित्तं, एवमादिचतुष्पदजातमसौ गृहीत्वा चतुर्विधं वक्ष्यमाणं सङ्ग्रहं करोति, वर्तमाननिर्देश प्राग्वत् ॥२०१॥ कोऽसौ चतुर्विधः सङ्ग्रह इत्याह—

उग्गा १ भोगा २ रायण्ण ३ खत्तिआ ४ संगहो भवे चउहा ।
आरक्खि १ गुरु २ वयंसा ३ सेसा जे खत्तिआ ४ ते उ ॥२०२॥

उग्र : भोगा राजन्याः क्षत्रियाः एष सङ्ग्राहो भवेच्चतुर्धा, एतेषामेव यथाक्रमं स्वरूपमाह—आरक्षका उग्र-दण्डकारित्वादुग्राः, गुरवो—गुरुस्थानीया भगवतः प्रतिस्थानीया भोगाः, समानवयसः कृतमण्डलाधिपत्या

वयस्याः, शेषा ये उक्तव्यतिरिक्तास्तुः पुनरर्थे ते पुनः क्षत्रियाः ॥२०२॥ अथ विविधलोकस्थितिनिबन्धनप्रतिपादनार्थं द्वारश्लोकचतुष्टयमाह—

आहारे १ सिप्प २ कम्मे ३ अ, मामणा ४ अ विभूसणा ५ ।
लेहे ६ गणिए ७ अ रूवे ८ अ, लक्खणे ९ माण ११ पोअए ११ ॥२०३॥

आहारविषयो विधिर्वाच्यः शिल्पं-घटादि तद्विषयं कर्मकृष्यादि तद्विषयः, चः समुच्चये, 'मामण'त्ति ममीकारार्थे देशीवचनं, चः प्राग्वत्, विभूषणा-मण्डनं, ते च वक्तव्ये, लेखो-लिपिविधानं गणितं-सङ्ख्यानं रूपं-काष्ठकर्मादि, चौ प्राग्वत्, लक्षणं-नृलक्षणादि, एतद्विषयो विधिर्वाच्यः 'मान'मिति मानोन्मानप्रमाणगणिमानां लक्षण-पोत इति बोहित्थः प्रोतं वा अनयोर्विधिर्वाच्यः ॥२०३॥

ववहारे १२ नीइ १३ जुद्धे १४ अ, ईसत्थे १५ अ उवामणा १६ ।
तिगिच्छा १७ अत्थसत्थे १८ अ, बंधे १९ घाए २० मारणा २१ ॥२०४॥

व्यवहारविषयः नीतिविषयो युद्धविषयश्च, इषुशास्त्रं-धनुर्वेदः तद्विषयः प्राकृतत्वात् मकारलोपः, उपासना नापितकर्म तदपि तत्र जातं, चिकित्सा रोगहरणलक्षणा सा च तदैव जाता, एवं सर्वत्र क्रियाध्याहारः कार्यः, अर्थशास्त्रं, बन्धो निगडादिजन्याः घातो-दण्डादिताडना, 'मारणा'त्ति जीविताद्व्यपरोपणम् ॥२०४॥

जण्णू २२ सव २३ समवाए २४, मंगले २५ कोउगे २६ इअ ।
वत्थे २७ गंधे २८ अ मल्ले २९ अ, अलंकारे ३० तहेव य ॥२०५॥

एकारान्ताः शब्दा प्रायः सर्वत्र प्राकृतत्वात्प्रथमान्ता ज्ञेयाः यज्ञा-नागादिपूजाः उत्सवाः-शक्रोत्सवादयः समवायः-गोष्ठ्यादिमेलापकः मङ्गलानि-स्वस्तिकादीनि, कौतुकानि-रक्षादीनि, मङ्गलानि च कौतुकानि चेति समासः, 'मङ्गले'त्ति एकारोऽलाक्षणिकः, वस्त्रं-चीनांशुकादि, गन्धः-काष्ठपुटादि माल्यं-पुष्पदामं अलङ्कार-केशभूषणादिः ॥२०५॥

चोलो ३१ वणय ३२ विवाहे ३३ अ, दत्तिआ ३४ मडयपूअणा ३५ ।
झावणा ३६ थूभ ३७ सद्दे ३८ अ, छेलावणय ३९ पुच्छणा ४० ॥२०६॥

चूलोपनयनं चूलेति बालानां चूडाकर्म तेपामेव कलाग्रहणार्थं नयनमुपनयनं साधुसकाशं धर्मश्रवणनिमित्तं वा, विवाहश्च दत्ता च कन्या पित्रादिना इत्येतदेव जातं, भिक्षादानं वा, मृतकपूजा, 'ध्यापना' अग्निसंस्कारः भगवदादिदग्धस्थानेपु स्तूपः, शब्दश्च-रुदितशब्दः 'च्छेलापनकमि'ति देशीवचनं उत्कृष्टबालक्रीडापनशेण्टितार्थवाचकं प्रश्नः-पृच्छा सा इङ्खिणिकादिलक्षणा इति द्वारसङ्क्षेपार्थः ॥२०६॥ अवयवार्थं प्रतिद्वारं वक्ष्यति भाष्यकृत्, अथाद्यद्वार मिधित्सयाह—

आसी अ कंदहारा मूलाहारा य पत्तहारा य ।
पुप्फफलभोइणोऽवि अ, जइआ किर कुलगरो उसभो ॥५॥ (मू०भा०)

यदा किलेति परोक्षाप्तागमवादसूचकाः, ऋषभः कुलकरो· राजा आसीत् तदा ते मिथुनकनरा आसन् कन्दाहाराः मूलाहाराश्च पुष्पफलभोजिनोऽपि च—

आसी अ इक्खुभोई इक्खागा तेण खत्तिआ हुंति ।
सणसत्तरसं धण्णं. आमं ओमं च भुंजीआ ॥६॥ (मू०भा०)

तदा क्षत्रिया येन कारणेन बाहुल्येनेक्षुभोजिन आसीरन् तेन कारणेन ते क्षत्रिया इक्ष्वाकवो लोके ख्याताः, सणः सप्तदशो यस्य तत्सणसप्तदशं धान्यं—शाल्यादि आमं—अपक्वं अवमं—न्यून भुञ्जीयाभुक्तवन्तः ।

ओमंपाहारंता अजीरमाणंमि ते जिणमुविंति ।
हत्थेहिं घंसिऊणं आहारेहत्ति ते भणिआ ॥७॥ (मू०भा०)

अवममपि—स्तोकमप्याहारयन्तोऽजीर्यत्याहारे ते जिनमुपयान्ति, भगवता हस्ताभ्यां घृष्ट्वा आहारयध्वमिति भणिता ॥७॥ इति भणिता सन्तः किमित्याह—

आसी अ पाणिघंसी तिम्मिअतंदुलपवालपुडभोई ।
हत्थतलपुडाहारा जइआ किर कुलकरो उसहो ॥८॥ (मू०भा०)



आसंश्च ते भगवदुपदेशात्पाणिभ्यां घर्पितुं शीलं येषां ते पाणिघर्पिणः, ता एवौषध्य हस्ताभ्यां घृष्ट्वा त्वचं चापनीय भुक्तवन्तः, कियत्यपि काले गते ता अपि न जीर्णवत्यः पुनरपि भगवन्तमापृच्छ्य तदुपदेशात्तीमितान्–तन्दुलान् प्रवालपुटे मुहूर्तं घृत्वा भुञ्जन्त इत्येवंशीलास्तीमिततन्दुलप्रवालपुटभोजिनः, कियता कालेन ततोऽपि न जीर्यति, भूयोऽपि पृष्ट्वा, तदुपदेशेन हस्ततलपुटे विहित आहारो येषां ते तथा आसीरन्, हस्ततलपुटेषु कियन्तं कालंमौपधीः स्थापयित्वा भुक्तवन्त इत्यर्थः, कालदोषात् औषध्यः कठिनतरभावमापन्ना न जीर्यन्ति, ततो भगवदुपदेशेन कक्षासु स्वेदयित्वा भुक्तवन्तः, पुनरभिहितप्रकारद्वयादिसंयोगैराहारितवन्तः, तद्यथा–पाणिभ्यां घष्ट्वा पत्रपुटेषु मुहूर्तं तीमित्वा, तथा हस्ताभ्यां घृष्ट्वा हस्तपुटेषु च मुहूर्तं धृत्वा, पुनर्हस्ताभ्यां घृष्ट्वा कक्षास्वेदं कृत्वा तथा तीमित्वा हस्तपुटेपु च मुहूर्तं घृत्वेत्यादिभङ्गकयोजनां केचिद् प्रदर्शयन्ति, धृष्ट्वा पदं विहाय, तच्चायुक्तं, त्वगपनयनमन्तरेण तिमितस्यापि हस्तपुटधृतस्य सौकुमार्यानुपपत्तेः, सूक्ष्मत्वग्मावत्त्वाददोप इति द्विकसयोगाः, त्रिकसंयोगभङ्गाः पुनर्हस्ताभ्यां घष्ट्वा पत्रपुटेषु च तीमित्वा हस्तपुटेषु मुहूर्तं धत्वेत्यादि, चतुःसंयोगजभङ्गः पुनरेवं–त्रिकं पूर्ववत् कक्षासु च स्वेदयित्वा इति ॥८॥ अमुमेवमर्थमुपसंहरन्नाह—

घंसेऊणं तिम्मण घंसणतिम्मणपवालपुडभोई ।
घंसणतिम्मपवाले हत्थउडे कयखेसए य ॥९॥ (मू०भा०)

घृष्ट्वा भुक्तवन्तः, तीमन प्रवालपुटे कृत्वा भुक्तवन्त इत्यनेन प्रागुक्तप्रत्येकभङ्गकाक्षेपः, घृष्टप्रवालपुटतिमितभोजिन इत्यनेन द्विकसयोगक्षेपः, घृष्ट्वा तीमन प्रवाले तीमित्वा हस्तपुटे कियन्तमपि काल धृत्वा भुक्तवन्त इति वाक्यशेपः, अनेन त्रिकसंयोगभङ्गकाक्षेपः, कक्षास्वेदे च कृते सति भुक्तवन्त इत्यनेनानन्तरोक्तत्रययुक्तेन चतुर्भङ्गकयोजनाक्षेपकृतः ।९॥ अत्रान्तरे—

अगणिस्स य उट्ठाणं दुमघंसा दट्ठु भीअपरिकहणं ।
पासेसुं परिछिंदह गिण्हह पागं च तो कुणह ॥१०॥ (मू०भा०)

एकान्तस्निग्धरूक्षकालयोर्वह्नेरुत्पादो न स्यात्, तदा च मनाग रूक्षोऽनः अग्नेरुत्थानं, संवर्त्तवातेन द्रुमाणा परस्पर सङ्घर्षात् त च प्रवृद्धज्वालावलीमहितं भूप्राप्तं तृणादिदहन्तं दृष्ट्वा अपूर्वरत्नबुद्ध्या ग्रहणं प्रति प्रवृत्तवन्तः, दह्यमानास्तु भीत परिकथन—ऋपभाय कथितवन्तः. भीताना परिकथनं भीत[कथन] भगवानाह—अशेषु आरुह्य यावदग्निः प्रज्वलति तावन्त प्रदेश विहाय तस्य सर्वासु दिक्षु पार्श्वेषु तृणादिक सर्वं परिच्छिन्त, न प्रसरति यथा. अग्निं गृहीत, ततः पाक कुरुत ॥१०॥ एतदेवाह—

पक्खेव डहणमोसहि, कहणं निग्गमण हत्थिसीसंमि ।
पयणारंभपवित्ती ताहे कासी अ ते मणुआ ॥११॥ (मू०भा०)

ततः अग्नौ औषधीनां प्रक्षेपं कृतवन्तः, ततो दहनमौषधीनामभूत्, ततो भगवते हस्तिस्कन्धारूढाय निर्गच्छते कथनं, एष एव सर्वं भक्षयति, नास्माकं किमपि दत्ते इति, प्रभुर्हस्तिस्कन्धे मृत्पिण्डस्य पत्रकाकरणं निर्दिश्य ईदृशानि कृत्वाऽग्नौ पक्त्वा एतेषु पाकं कुरुध्वमित्युक्तवान्, ततस्ते मिथुनकास्तथारूपाणि भाण्डानि कृत्वा पचनारम्भप्रवृत्तिमकार्षुः, इत्थं प्रथमकुम्भकारशिल्पमुत्पन्नम् ॥११॥ उक्तमाहारद्वारं, अथ शिल्पद्वारमाह—

मिंठेण हत्थिपिंडे मट्टियपिंडं गहाय कुडगं च ।
निव्वत्तेसि अ तइआ जिणोवइट्ठेण मग्गेण ॥१॥
निव्वत्तिए समाणे भण्णई राया तओ बहुजणस्स ।
एवइआ मे कुव्वह पयट्टिअं पढमसिप्पं तु ॥२॥ (प्रक्षिप्ते)

अमू अन्यकर्तृके अव्याख्याते च ॥१२॥

पंचेव य सिप्पाइं घड १ लोहे २ चित्त ३ णंत ४ कासवए ५ ।
इक्किक्कस्स य इत्तो वीसं वीसं भवे भेया ॥२०७॥

गाथा-२०६
२०७

॥२०८

पञ्चैव मूलभूतानि शिल्पानि तद्यथा—घटकारशिल्पं लोहकारशिल्पं चित्रकारशिल्पं 'णन्तमि'ति देशीवचनं वस्त्रवाचकं, अनेन वस्त्रशिल्पं, काश्यप इति नापितं शिल्पं, इयमत्र भावना वस्त्रवृक्षेषु हीयमानेषु प्रभुणा वस्त्रशिल्पमुत्पादितं, गृहाकृतिषु हीनेषु लोहकारशिल्पं, प्राणिनां कालदोषान्नखरोमाण्यपि वर्द्धितुं प्रवृत्तानि तन्निमित्तं नापितशिल्पं, गृहाणि चित्ररहितानि विशोभनानीति चित्रकारशिल्पं, एभ्यः पञ्चभ्य एकैकस्य विंशतिर्विंशतिर्भेदा अभूवन् ॥२०७॥ अथ शेषद्वारार्थं प्रतिपादनायैकोनविंशतिधा भाष्यकृदाह—

कम्मं किसिवाणिज्जाइ ३ मामणा जा परिग्गहे ममया ४ ।
पुव्विं देवेहिं कया विभूसणा मंडणा गुरुणो ५ ॥१२॥ (मू०भा०)

कर्म—कृषिवाणिज्यादि मामणा—ममीकारार्थं देशीवचनमेतत् या परिग्रहे ममता सा मामणा, सा च तत्काल एव प्रवृत्तेति, विभूषणा—मण्डना, सा च पूर्वं देवेन्द्रैर्गुरोर्भगवतः कृता ततो लोकेऽपि प्रवृत्ता ॥१२॥

लेहं लिवीविहाणं जिणेण बंभीइ दाहिणकरेणं ६ ।
गणिअं संखाणं सुंदरीइ वामेण उवइट्ठं ७ ॥१३॥

लेखनं—लेखः सूत्रे नपुंसकत्वात् लिपिविधानं जिनेन ब्राह्म्या दक्षिणकरेण प्रदर्शितं, अत एव तदादित आरभ्य गण्यते, गणितमेकाद्यादिसङ्ख्यानं, तच्च सुन्दर्या वामकरेणोपदिष्टमतस्तदादित आरभ्य गण्यते ॥१३॥

भरहस्स रूवकम्मं ८ नराइलक्खणमहोइअं बलिणो ९ ।
माणुम्माणवमाणप्पमाणगणिमाइवत्थूणं १० ॥१४॥

रूपं–काष्ठकर्म्मपुस्तकर्म्मेत्यादि भरतस्योपदिष्टं, नरादिलक्षणमथोदितं बाहुबलिनः उदितमुक्तं, वस्तूनां मानोन्मानावमानप्रमाणगणितानि, मानं द्विधा–धान्यमानं रसमानं च, तत्र धान्यमानं रसमानं च, तत्र धान्यमानं सेतिकादि, मेयस्य रसस्य कर्पादि, उन्मानं गणस्य पूगीफलादेः, अत्र पुञ्जे दश सहस्राः सन्ति इत्यादि, उन्मानं–तोलयं इयन्ति पलानि हस्तादि वा प्रमाणं, परिच्छेद इयद्वर्णमिदं स्वर्णं, ईयत्पानीयमिदं रत्नं, गणितमेंकादि प्रागुक्तं, एवंरूपं पञ्चप्रकारमपि मानं भगवति राज्यमनुशाशति भगवदुपदेशेन प्रवृत्तम् ॥१४॥ पोतद्वारमाह–

भा०गाथा
१४–१५

मणिआई दोराइसु पोआ तह सागरंमि वहणाइं ११ ।
ववहारो लेहवणं कज्जपरिच्छेदणत्थं वा १२ ॥१५॥ (मू०भा)

ये मणिकादयः आदिशब्दात् मुक्ताफलादयः दवरकादिषु लोकेन प्रोताः क्रियन्ते तदा तत् पकर्षेण उतनं प्रोतं तदा प्रवृत्तं, अथवा पोता नाम सागरे वहनानि–प्रवहणानि, तान्यपि प्रवृत्तानि, व्यवहारो नाम विसंवादे सति राजकुलकरणे गत्वा निजनिजभापालेखापनलक्षणः कार्यपरिच्छेदनार्थं वा पणमुक्तिलक्षणः स उभयरूपोऽपि तदा प्रवृत्तः ॥१५॥

णीई हक्काराई सत्तविहा अहय सामभेआई १३ ।
जुद्धाइ वाहुजुद्धाइआइ वट्टाइआणं वो १४ ॥१६॥ मू०भा०)

हक्कारादिका नीतिः सप्तधा–हक्कारः मक्कारः धिक्कारः परिभाषणा मण्डलीबन्धः वारकप्रक्षेपः महापराधे छविच्छेदः, एता विमलवाहनादारभ्य भरतकालं पर्यन्तं कृत्वा यथायोगं प्रवृत्ता, अथवा साममेदादिका चतुष्प्रकारा साम–भेद–दण्ड–उपप्रदानं, एषा चतुर्विधापि भगवत्काले समुत्पन्ना, युद्धानि–बाहुयुद्धादीनि यद्वा वर्त्तिकादीनां, उभयान्यपि तदा प्रवृत्तानि ॥१६॥

ईसत्थं धणुवेओ १५ उवासणा मंसुकम्ममाइया १६ ।
गुरूरायईणं वा उवासणा पज्जुवासणया ॥१७॥ (मू०भा०)

ईपुशास्त्रं–धनुर्वेदः, स च तदैव राजधर्मे प्रावर्तत, उपासना–श्मश्रुकर्त्तनादि नापितकर्म तदैव जातं, यद्वा उपासना गुरुराजादीनां पर्युपासना सापि तदैव प्रवृत्ता ॥१७॥

रोगहरणं तिगिच्छा १७ अत्थागमसत्थमत्थसत्थंति १८ ।
निअलाइजमो बंधो १९ घाओ दंडाइत्ताडणया २० ॥१८॥ (मू०भा०)

चिकित्सा—रोगापहारक्रिया, अर्थागमनिमित्तं शास्त्रं अर्थशास्त्रं, बन्धो—निगडादिभिर्यमः—संयमनं, घातो—दण्डादिभिस्ताडना ॥ १८ ॥

मोरणया जीववहो २१ जण्णा नागाइआण पूजाओ २२ ।
इंदाइमहा पायं पइनिअया ऊसवा हुति २३ ॥१९॥

मारणं—जीववधो, भरतकाले उत्पन्नः, यज्ञा—नागादीनां पूजाः, उत्सवाः—प्रतिनियता वर्षमध्ये प्रतिनियत—भाविन इन्द्रमहाद्याः, पूजास्त्वनियतकालभाविन्य इति पूजामहोत्सवानां प्रतिविशेषः, एतेऽपि तत्काले प्रवृत्ताः॥१९॥

समवाओ गोट्ठीणं गामाईणं च संपसारो वा २४ ।
तह मंगलाइं सत्थिअसुवण्णसिद्धत्थयाइणि २५ ॥२०॥ (मू०भा०)

समवायनं समवायो गोष्ठिकानां मेलापकः, यद्वा ग्रामादीनां, आदेः खेटकर्बटनगरादिग्रहः सम्—एकीभावेन किमपि प्रयोजनमुद्दिश्यैकत्र मीलनं सम्प्रसारसमवायो ग्रामादिजनानां किञ्चित्प्रयोजनमुद्दिश्य यदेकत्र मीलनं समवायः, तथा मङ्गलानि—स्वस्तिकसुवर्ण...द्धार्थकादीनि, तानि पूर्वं देवैर्भगवतो मङ्गलबुद्ध्या प्रयुक्तानि, ततो लोकेऽपि प्रवृत्तानि ॥२॥

पुव्वि कयाइ पाहुणा सुरेहि रक्खाइ कोउगाइं च २६ ।
तह वत्थगन्धमल्लालंकारा केसभूसाई २७–२८–२९–३० ॥२१॥

पूर्वं प्रभोः सुरैः कृतानि कौतुकानि–रक्षादीनि, तथा वस्त्रं–चीनांशुकादि गन्धः कुष्ठपुटादि माल्यं–पुष्पदामं अलङ्कारः केशभूषादिः ॥२१॥

तं दट्ठूण पवत्तोऽलंकारेउं जणोऽवि सेसोऽवि ।
विहिणा चूलाकम्मं वालाणं चोलया नाम ३१ ॥२२॥

त वा अलङ्कारं भगवतो देवैः कृतं दृष्ट्वा अवशेषोऽपि जनो स्वं स्वमलङ्कारं कर्तुं प्रवृत्तः, विधिना शुभनक्षत्रमुहूर्तादौ वालानां चूडाकर्म्म तदपि तदा प्रवृत्ता ॥२२॥

उवणयणं तु कलाणं गुरुमूले साहुणा तओ धम्मं ।
घित्तुं हवंति सड्ढा केई दिक्खं पवज्जंति ३२ ॥२३॥

उपनयनं–तेषामेव वालानां कलाग्रहणाय गुरोर्मूले–समीपे नयनं, धर्मश्रावणाय वा साधोः सकाशं नयन-मुपनयनं, तस्माच्च साधोर्धर्म्मं गृहीत्वा केचित् श्राद्धाः स्युरपरे लघुकर्माणो दीक्षां प्रपद्यन्ते, एतच्चोभयमपि तदा प्राप्तम् ॥२३॥

दट्ठुं कयं विवाहं जिणस्स लोगोऽवि काउमारद्धो ३३ ।
गुरुदत्तिआ य कण्णा परिणिज्जंते तओ पायं ॥२४॥

जिनस्य विवाहं कृतं दृष्ट्वा लोकोऽपि स्वापत्यादीनां विवाहं कर्तुमारब्धवान्, भगवता युगलधर्मव्यवच्छेदाय भरतेन सह जाता ब्राह्मी बाहुबलिने दत्ता, बाहुबलिना सह जाता सुन्दरी भरतायेति दृष्ट्वा तदारभ्य प्रायो लोके कन्या पित्रा दत्ता सती परिणीयते ॥२४॥

दत्तिव्व दाणमुसभं दिंतं दट्ठूं जणंमिवि पवत्तं ।
जिणभिक्खादाणंपि हु, दट्ठूं भिक्खा पवत्ताओ ३४ ॥२५॥

अथवा दत्तिर्दानं, तच्च भगवन्तं सांवत्सरिकदानं ददतं दृष्ट्वा लोकेऽपि प्रवृत्तं, यद्वा दत्तिः—भिक्षादानं तच्च जिनस्य प्रपौत्रेण कृतं दृष्ट्वा लोकेऽपि भिक्षा प्रवृत्ता ॥२५॥

मडयं मयस्स देहो तं मरुदेवीइ पढमसिद्धुत्ति ।
देवेहि पुरा महिअं ३५ झावणया अग्गिसक्कारो ॥२६॥

मृतकं—मृतस्य देहः, तच्च मृतकं मरुदेव्याः प्रथमसिद्ध इतिकृत्वा देवैः पुरा महितं—पूजितं, ध्मापना अग्निसंस्कारः ॥२६॥

गाथा-

सो जिणदेहाईणं देवेहि कओ ३६ चिआखु थूभाइ ३७ ।
सद्दो अ रुण्णसद्दो लोगोऽवि तओ तहा पगओ ३८ ॥२७॥

स च भगवतो निर्वाणप्राप्तस्यान्येषां च साधूनां प्रथमं त्रिदशैः कृतः, भगवद्देहादिदग्धस्थानेषु भरतेन स्तूपाः कृताः, एतल्लोकेऽपि तदा प्रवृत्तं, शब्दाश्च–रुदितशब्दः, स च भगवत्यपवर्गं गते भरतदुःखमसाधारण-मवगत्य तदपसरणाय शक्रेण कृतः, लोकोऽपि ततस्तथा शक्रवद्रुदितशब्दं प्रकृतः–कर्तुमारब्धवान् ॥२७॥

छेलावणमुक्किट्ठाइ वालकीलावणं व सेंटाइ ३९ ।
इंखिणिआइ रुअं वा. पुच्छा पुण किं कहं कज्जं ? ॥२८॥

छेलापनकं देशीवचनं, तच्चानेकार्थं, उत्कृष्ट(ष्टिः)नाम हर्षवशादुत्कर्षेण नन्दनम्, आदिशब्दात् सिंहनादादिग्रहः, यद्विा वालकीडापन अथवा सेंटि(शेण्टि)तादि, प्रच्छनं पृच्छा, सा इङ्खिणिकादिरुतलक्षणा, इङ्खिणिका हि कर्णमूले घण्टिका चालयन्ति, ततो यक्षाः खल्वागत्य तासां कर्णेषु किमपि प्रष्टुर्विवक्षितं कथयन्ति, आदिशब्दात् इङ्खिणिकादिसङ्ग्रहः, अथवा किं कार्यं? कथं वा कार्यमित्येवंलक्षणा या लोके प्रसिद्धा सा पृच्छा ॥२८॥

अहव निमित्ताइणं मुहसइआइ सुहदुक्खपुच्छा वा ४० ।
इच्चेवमाइ पाएणुप्पन्नं उसभकालंमि ॥२९॥

गाथा

अथवा निमित्तादीनामादिशब्दात्स्वप्नफलाफलादिग्रहः, अथवा सुखशयितादिरूपा सुखदुःखपृच्छा इत्येवमादि प्रायः सर्वमुत्पन्नमृषभस्वामिकाले, उपलक्षणमेतत्, किञ्चित् भरतकुलकरकाले च तथा चाह—॥२९॥

किंचिच्च (त्थ) भरहकाले कुलगरकालेऽवि किंचि उप्पन्नं ।
पहुणा य देसिआइं सव्वकलासिप्पकम्माइं ॥भा०३०॥

किञ्चिन्निगडादिभिर्बन्धो-घात इत्यादि भरतकाले उत्पन्नं, किञ्चित्-हक्कारादिकं कुलकरकाले उत्पन्नं, प्रभुणा तु देशितानि सर्वकलाशिल्पकर्माणि ॥३०॥

उसभचरिआहिगारे सव्वेसिं जिणवराण सामण्णं ।
संबोहणाइ वुत्तं वुच्छं पत्तेअमुसभस्स ॥२०८॥

इह वक्तुमिदानीमधिकृतं भगवतश्चरित्रं, तत्र ऋषभचरिताधिकारे वक्ष्यमाणं सम्बोधनादि सर्वेषामपि जिनवराणां सामान्यं, अतस्तथैव सामान्येनोक्त्वा पश्चात् प्रत्येकं एकमेकं प्रति प्रत्येकं ऋषभस्य अशेषं चरित्रं वक्ष्ये ॥२०८॥ अथ सम्बोधनादिद्वारप्रतिपादनार्थं द्वारश्लोकत्रयमाह—

संबोहण १ परिच्चाए २, पत्तेअं ३ उवहिंमि अ ४ ।
अन्नलिंगे कुलिंगे अ ५, गामायर ६ परिसहे ७ ॥२०९॥

गाथा-२०८
२०९

सर्वेऽपि तीर्थकृतः स्वयम्बुद्धा तथापि कल्प इतिकृत्वा लोकान्तिकदेवाः सम्बोधनं कुर्वन्ति ततः सम्बोधनं परित्याग इति परित्यागविषये विधिर्वाच्यः, प्रत्येकमिति कः कियत्परिवारो निष्क्रान्तः?, उपधिविषयो विधिर्वाच्यः, कः केनोपधिनासेवितः? को वा विनेयानामनुज्ञातः?, अन्यलिङ्गं साधुलिङ्गं कुलिङ्गं–तापसादिलिङ्गं, तत्र न तेऽन्यलिङ्गेन निष्क्रान्तो नापि कुलिङ्गेन, किन्तु तीर्थकरलिङ्ग एव, ग्रामाचारविषयाः परीषहाः क्षुदादयः, तयोर्विधिर्वाच्यः, कुमारप्रव्रजितैर्विषया न भुक्ताः, शेषैर्भुक्ताः, परीषहाः सर्वैर्निर्जिता एवेति ॥२०९॥

जीवोवलंभ ८ सुयलंभे ९, पच्चक्खाणे १० अ संजमे ११ ।

छउमत्थ १२ तवोकम्मे १३, उप्पाया नाण १४ संगहे १५ ॥२१०॥

जीव इत्युपलक्षणं सर्वैस्तीर्थकृद्भिर्नवजीवादिपदार्था उपलब्धाः, श्रुतलाभः पूर्वभवे प्रथमस्य द्वादशाङ्गान्यासन्, शेषाणामेकादश: प्रथमान्तस्याप्येकारान्तता सूत्रे प्राकृतत्वात्, प्रत्याख्यानं–पञ्चमहाव्रतरूपं आद्यचरमयोः, मध्यमानां तु चतुर्महाव्रतरूपं, संयमोऽप्याद्यचरमयोः सामायिकच्छेदोपस्थापनाभ्यां द्विभेदः मध्यमानां सामायिकरूप एव, सप्तदशप्रकारो वा सर्वेषां, कः कियन्तं कालं छद्मस्थासीत्?, तपः कर्म किं कस्येति वाच्यं, ज्ञानोत्पादो वाच्यो–यस्य यस्मिन्नहनि केवलमुत्पन्नमिति, सङ्ग्रहः–कस्य कियान् शिष्यादि? ॥२१०॥

तित्थं १६ गणो १७ गणहरो १८, धम्मोवायस्स देसगा १९ ।
परिआअ २० अंतकिरिआ, कस्स केण तवेण वा २१ ॥२११॥

कथं कस्य कदा तीर्थमुत्पन्नं ?, तीर्थं सङ्घः, गणः—एकवाचनाचारक्रियास्थानां समुदायः, कस्य कियन्तः? गणधराः—सूत्रकर्तारः, कस्य कियन्तः धर्मोपायस्य देशका वाच्या, धर्मस्योपायो द्वादशाङ्गं—प्रवचनं तस्य देशकास्ते च सर्वतीर्थकृतां गणधराः, अथवा अन्येऽपि यस्य यावन्तश्चतुर्दशपूर्वविदः, कः कस्य प्रव्रज्यादिपर्यायः अन्ते क्रिया अन्तक्रिया, सा च निर्वाणलक्षणा, सा कस्य केन तपसा सञ्जाता ? वाशब्दात् कस्मिन् वा कियत्परिवारपरिवृत्तस्य चेति वाच्यम् ॥२११॥ आद्यद्वारार्थमाह—

सव्वेऽवि सयंबुद्धा लोगन्तिअबोहिआ य जीएणं १ ।
सव्वेसिं परिच्चाओ संवच्छरिअं महादाणं ॥२१२॥

सर्वे एव तीर्थकृतः स्वयम्बुद्धा वर्त्तन्ते, गर्भस्थानामपि ज्ञानत्रयोपेतत्वात्, तथापि लोकान्तिकबोधिताश्च जीतमिति—कल्प इति कृत्वा, परित्यागद्वारमाह सर्वेषां परित्यागः, सांवत्सरिकं महादानं वक्ष्यमाणम् ॥२१२॥

रज्जाइच्चाओऽवि य २ पत्तेअं को व कत्तिअसमग्गो ३ ।
को कस्सुवहीं ? कोवाऽणुण्णाओ केण सीसाणं ४ ॥२१३॥

गाथा-२११-२१३

राज्यादित्यागोऽपि च परित्यागः, प्रत्येकद्वारमाह, प्रत्येकमिति क एककः, को वा कियत् समग्र इति वाच्यं, कः कस्योपधिः ?, को वा के वानुज्ञातः ? शिष्याणामुपधिः ? इदं च गाथाद्वयं समासव्याख्यारूपं ॥२१३॥ न च समासेनोक्तं मन्दमतयोऽवुध्यन्ते, ततः प्रपञ्चेन विवरीपुराद्यद्वारमाह—

सारस्सय १ माइच्चा २ वण्ही ३ वरुणा ४ य गद्दतोया ५ य ।
तुसिआ ६ अव्वोवाहा ७ अग्गिच्चा ८ चेव रिट्ठा ९ य ॥२१४॥

सारस्वता मकारोऽलाक्षणिकः, आदित्याः वह्नयः वरुणाः गर्दतोयाः चः–समुच्चये तुषितः अव्याबाधा अग्नयः ताश्च सञ्ज्ञान्तरतो मरुतोऽप्युच्यते, रिष्टाश्चेति 'तात्स्थ्यात्तद्व्यपदेशः' इति न्यायाद् रिष्ट–रिष्टविमानवासिनो देवा अपि रिष्टाः ९ ॥२१४॥

एए देवनिकाया भयवं बोहिंति जिणवरिंदं तु ।
सव्वजगज्जीवहिअं भयवं ! तित्थं पवत्तेहि ॥२१५॥

एते देवनिकायाः सारस्वतादयो भगवन्तं बोधयन्ति जिनवरेन्द्रं तु, सर्वजगज्जीवहित भगवन् ! तीर्थं प्रवर्तयस्व ॥२१५॥

परित्यागद्वारमाह—

संवच्छरेण होही अभिणिक्खमणं तु जिणवरिंदाणं ।
तो अत्थसंपयाणं पवत्तए पुव्वसूरंमि ॥२१६॥

संवत्सरेण जिनेन्द्राणामभिनिष्क्रमणं भविष्यति, ततोऽर्थसम्प्रदानं प्रवर्त्ततेऽर्थस्य सम्यक् तीर्थप्रभावनबुद्धयाऽनुकम्पाबुद्धया च न तु कीर्त्तिबुद्धया प्रदानं जनेभ्यः प्रवर्त्तते, पूर्वसूर्ये—पूर्वाह्णे ॥२१६॥

कियत्प्रतिदिवसं दीयते ?

एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा ।
सूरोदयमाईअं दिज्जइ जा पायरासाओ ॥२१७॥

अष्टौ वाऽन्यूनानि—परिपूर्णानि शतसहस्राणि—लक्षाणि, सूर्योदय आदौ यस्य दानस्य तत्सूर्योदयादि-क्रियाविशेषणं, सूर्योदयादारभ्य दीयते इति भावः, प्रातरशनं प्रातराशस्तस्मात्तमभिव्याप्य प्रातर्भोजनकालं यावत् ॥२१७॥

यथा दीयते तथा चाह—

सिंघाडगतिचउक्कचच्चरचउमुहमहापहपहेसुं ।
दारेसु पुरवराणं रत्थामुहमज्झयारेसुं ॥२१८॥

शृङ्गाटकं—शृङ्गाटकाकृतिपथयुक्तं, त्रिकोणस्थानं—त्रिकं यत्र रथ्यात्रयं मिलति, चतुष्कं—चतुष्पथं च समाहारः, चत्वरं-बहुरथ्यापातस्थानं चतुर्मुखं—यस्माच्चतुर्षु दिक्षु पन्थानो निस्सरन्ति, माहापथो—राजमार्गः, शेषः सामान्यः पन्थाः एतेषां द्वन्द्वस्तेषु, पुरवराणां द्वारेषु रथ्यानां मुखानि प्रवेशा मध्याकारः—मध्य एवकार शब्दस्य स्वार्थिकत्वात् रथ्यामुखमध्याकारस्तेषु ॥२१८॥ किमित्याह—

वरवरिआ घोसिज्जइ किमिच्छअं दिज्जए बहुविहीअं ।
सुरअसुरदेवदाणवनरिंदमहिआण निक्खमणे ॥२१९॥

'वरं याचध्वं याचध्वं' इत्येवं घोषणा समयपरिभाषया वरवरिकोच्यते, सा शृङ्गाटकादिषु घोष्यते, कः किमिच्छति यो यदिच्छति तस्य तद्दानं दीयते इति समयसञ्ज्ञया किमिच्छकमुच्यते, बहवो विधयो रत्नस्वर्णादि वा नव प्रकारा यत्र तद्बहुविधिकं, सुरैर्वैमानिकैरसुरैर्भवनपतिभिर्देवग्रहणेन ज्योतिष्कैर्दानवग्रहणेन व्यन्तरैर्नरेन्द्रैरिति, इन्द्रेति इन्द्रशब्दः प्रत्येकं सम्बन्ध्यते ॥२१९॥ महितानां भगवतां निष्क्रमणे अथैकैकेन तीर्थकृता कियद्द्रव्यं दत्तं संवत्सरेणेत्याह—

तिण्णेव य कोडिसया अट्ठासीइं च हुंति कोडीओ ।
असिइं च सयसहस्सा एअं संवच्छरे दिण्णं ॥२२०॥

त्रीण्येव कोटिशतानि अष्टाशीतिश्च भवन्ति कोटयः अशीतिश्च शतसहस्राणि, एतच्च प्रतिदिनदेयं त्रिभिः षष्ठयऽधिकैर्वासरशतैर्गुणितं यथा वर्णितं भवति ॥२२०॥

॥ इति प्रथमवरवरिकावचूरिः ॥

अधिकृतपरित्यागद्वारानुपेत्यैवाह—

वीरं अरिट्ठनेमिं पासं मल्लिं च वासुपुज्जं च ।
एए मुत्तूण जिणे अवसेसा आसि रायाणो ॥२२१॥

एतान् पञ्चजिनान् मुक्त्वाऽवशेषा आसन् राजानः ॥२२१॥

रायकुलेसुऽवि जाया विसुद्धवंसेसुं खत्तिअकुलेसुं ।
न य इत्थिआभिसेआ कुमारवासंमि पव्वइआ ॥२२२॥

एते हि महावीरप्रभृतयः, पञ्च तीर्थकृतो राजकुलेष्वपि जाता विशुद्धवंशेषु, क्षत्रियकुलेषु राजकुलं हि किञ्चिदक्षत्रियमपि स्यादतः क्षत्रियकुलेष्वित्याह नवेप्सित।भिषेको किन्तु कुमारवास एव प्रव्रजिताः ॥२२२॥

संत्ती कुंथू अ अरो अरिहंता चेव चक्कवट्टी अ ।
अवसेसा तित्थयरा मंडलिआ आसि रायाणो ॥२२३॥

ये च राजानस्तेषु एते त्रयोऽर्हन्तश्चक्रवर्त्तिनश्चासन्, अवशेषा माण्डलिका राजान आसन्, स्वस्वमण्डलाधिपतय इत्यर्थः ॥२२३॥ गतं परित्यागद्वारं, प्रत्येकद्वारमाह–

एगो भगवं वीरो पासो मल्ली अ तिहि तिहि सएहिं ।
भयवं च वासुपुज्जो छहिं पुरिससएहिं निक्खंतो ॥२२४॥

एको भगवान् वीरः प्राव्रजत्, पार्श्वः मल्लिश्च त्रिभिः त्रिभिः शतैः भगवांश्च वासुपूज्यः षड्भिः पुरुषशतैर्निष्क्रान्तः ॥२२४॥

उग्गाणं भोगाणं रायण्णाणं च खत्तिआणं च ।
चउहिं सहस्से हुसभो सेसा उ सहस्सपरिवारा ॥२२५॥

उग्राणां भोगानां राजन्यानां क्षत्रियाणां एव तेषां विशेषः प्रागेवोपदर्शितः, चतुर्भिः सहस्रैः सह ऋषभो निष्क्रान्तः, शेषास्त्वजितस्वाम्यादयः सहस्रपरिवाराः ॥२२५॥ प्रसङ्गतोऽत्रैव द्वारे ये यस्मिन् वयसि निष्क्रान्ता इत्येतदाह—

वीरो अरिट्ठनेमी पासो मल्ली अ वासुपुज्जो अ ।
पढमवए पव्वइआ सेसा पुण पच्छिमवयंमि ॥२२६॥

एते पञ्च तीर्थकृतः प्रथमवयसि–कुमारत्वलक्षणे प्रव्रजिताः, शेषा मध्ये वयसि–यौवनलक्षणे वर्त्तमानाः प्रव्रजिताः ॥२२६॥

उपाधद्वारमाह–

सव्वेऽवि एगदूसेण निग्गया जिणवरा चउव्वीसं ।
न य नाम अण्णलिंगे नो गिहिलिंगे कुलिंगे वा ५ ॥२२७॥

सर्वेऽपि यावन्तोऽतीता जिनेन्द्रा एकदूष्येणैकेन वस्त्रेण निर्गता–निष्क्रान्ताः चतुर्विंशतिसङ्ख्याः, एतेन सर्वास्वप्यवसर्पिणीषूत्सर्पिणीषु च प्रत्येकं भरतक्षेत्रे चतुर्विंशतिरेव तीर्थङ्करा अभूवन्निति ख्यापितं, य उपधिरासेवितो भगवद्भिः स साक्षादुक्तः, यः पुनर्विनेयेभ्यः स्थविरकल्पिकादिभेदभिन्नेभ्योऽनुज्ञातः स खल्वपिशब्दसूचितो ग्रन्थान्तरादवसेयः ।

अथ लिङ्गद्वारमाह—सर्वे तीर्थंकरास्तीर्थंकरलिङ्ग एव निष्क्रान्ताः, न च नाम अन्य लिङ्गे गृहिलिङ्गे कुलिङ्गे वा, अन्यलिङ्गाद्यर्थं उक्त एव ॥२२७॥ अथ यो येन तपसा निष्क्रान्तस्तदाह—

सुमइ त्थ निच्चभत्तेण निग्गओ वासुपुज्ज जिण चउत्थेणं ।
पासो मल्लीवि अ अट्ठमेण सेसा उ छट्ठेणं ॥२२८॥

सुमतिर्नित्यभक्तेनाऽनवरतभक्तेन निर्गतो निष्क्रान्तः, इति निपातः पुरणे, वासुपूज्यो जिनश्चतुर्थेन निर्गत इति वर्त्तते, पार्श्वो मल्ल्यपि चाष्टमेन, शेषास्तु ऋषभादयः षष्ठेन ॥२२८॥ अथैहैव निष्क्रमणाधिकाराद्यो यत्र येषूद्यानादिषु निष्क्रान्त इत्येतदाह—

उसभो अ विणीआए बारवईए अरिट्ठवरनेमी ।
अवसेसा तित्थयरा निक्खंता जम्मभूमीसुं ॥२२९॥

ऋषभो विनीतायां निष्क्रान्तः द्वारवत्यामरिष्ठनेमिः, अवशेषा निष्क्रान्ता जन्मभूमिषु, यत्र जातास्तत्रै-वेत्यर्थः ॥२२९॥

उसभो सिद्धत्थवणंमि वासुपुज्जो विहारगेहंमि ।
धम्मो अ वप्पगाए नीलगुहाए अ मुणीनामा ॥२३०॥

ऋषभः सिद्धार्थवने, वासुपूज्यो विहारगृहकाभिधानोद्याने, धर्मश्च वप्रगायां-वप्रगाभिधानोद्याने, नीलगुफायां च-नीलगुफाभिधानोद्याने मुनिसुव्रतः ॥२३०॥

आसमपयंमि पासो वीरजिणिंदो अ नायसंडंमि ।
अवसेसा निक्खंता, सहसंववणंमि उज्जाणे ॥२३१॥

आश्रमपदे उद्याने पार्श्वः, वीरजिनेन्द्रश्च ज्ञातखण्डोद्याने, अवशेषाः सहस्राम्रवने निष्क्रान्ताः ॥२३१॥ अथ प्रसङ्गत एव निष्क्रमणकालमाह—

पासो अरिट्ठनेमी सिज्जंसो सुमइ मल्लिनामो अ ।
पुव्वण्हे निक्खन्ता सेसा पुण पच्छिमण्हंमि ॥२३२॥

पार्श्वादयः पञ्च जिनाः पूर्वाह्णेनिष्क्रान्ताः, शेषा पुनः पश्चिमाह्ने ॥२३२॥ गतमुपधिद्वारमथ ग्राम्याचार-द्वारमाह—

गामायारा विसया निसेविआ ते कुमारवज्जेहिं ६ ।
गामागराइएसु व केसु विहारो भवे कस्स ? ॥२३३॥

ग्राम्याचारा विषया उच्यन्ते, ते विषया निषेविताः कुमारवर्जैः—कुमारभावे ये प्रव्रज्यां गृहीतवन्तस्तान् मुक्त्वा शेषैः सर्वैस्तीर्थकृद्भिरासेविता विषयाः ॥२३३॥ अथ ग्रामाकरादिषु विहारास्ते वक्तव्याः, कस्य केषु ग्रामाकरादिषु विहार आसीदेतदेवाह—

मगहारायगिहाइसु मुणओ खित्तारिएसु विहरिंसु ।
उसभो नेमी पासो वीरो अ अणारिएसुंपि ॥२३४॥

मगधादिषु जनपदेषु राजगृहादिषु नगरेषु मुनयस्तीर्थकृतः क्षेत्रार्येष्विति आर्यक्षेत्रेषु विहृतवन्तः, इहार्यक्षेत्रचिन्तायां शास्त्रान्तरेषु मगधादयो जनपदा राजगृहादीनि च नगराण्युक्तानि इत्यत्रापि "मगहारायगिहाइसु" इत्युक्तं अन्यथा ऋषभस्वामिन आदितीर्थकरत्वात् तदनुरोधेन नगरचिन्तायां विनीतादिष्वित्युच्यते, ऋषभाद्याश्चत्वारस्तीर्थकृतोऽनार्येष्वपि क्षेत्रेषु विहृतवन्तः ॥२३४॥ परीषद्वारमाह—

उदिआ परीसहा सिं पराइआ ते अ जिणवरिंदेहिं ७ ।
नव जीवाइपयत्थे उवलंभेऊण च निक्खंता ८ ॥२३५॥

उदिताः परीषहाः—शीतोष्णादयः एषां तीर्थंकृतां परं पराजितास्ते परीषहाः सर्वैरपि जिनवरेन्द्रैः, जीवोपलम्भद्वारमाह—नवजीवादिपदार्थानुपलभ्य च निष्क्रान्ताः आदिशब्दादाश्रवसंवरबन्धपुण्यपापादिग्रहः ॥२३५॥ अथ श्रुतलाभमाह—

पढमस्स बारसंगं सेसाणिक्कारसंग सुयलंभो ९ ।
पंच जमा पढमंतिमजिणाण सेसाण चत्तारि ॥२३६॥

प्रथमस्य ऋषभस्य पूर्वभवे श्रुतलाभः परिपूर्णं द्वादशाङ्गम् , शेषाणामेकादशाङ्गानि, यस्य च यावान् पूर्वभवे श्रुतलाभस्तस्य तावांस्तीर्थंकरजन्मन्यनुवर्त्तते, अथ प्रत्याख्यानद्वारमाह—प्रथमान्त्यजिनयोः पञ्च यमाः—प्राणातिपातादीनि व्रतानि, शषाणां द्वाविंशतेर्मैथुनव्रतवर्जानि चत्वारि, तस्य परिग्रह एवान्तर्भावात् ॥२३६॥

पच्चक्खाणमिणं १० संजमो अ पढमंतिमाण दुविगप्पो ।
सेसाणं सामइओ सत्तरसगो अ सव्वेसिं ११ ॥२३७॥

प्रत्याख्यानमिदं संयमोऽपि सामायिकादिरूपः प्रथमान्त्यजिनयोर्द्विविकल्प इत्वरं सामायिकं छेदोपस्थापनीयं च, शेषाणां द्वाविंशतेर्यावत्कथितमेवैकं सामायिकं सप्तदशाङ्गः सप्तदशभेदः, पुनः सर्वेषां चतुर्विंशतेरपि तीर्थकृतामभूत् चः पुनरर्थे स चासौ—

पञ्चास्रवाद्विरमणं, पञ्चेन्द्रियनिग्रहः कषायजयः ।
दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥१॥

अथ छद्मस्थतपः क्रमद्वारमाह—



**सहस्सं १ बारस २ चउदस ३ अट्ठार ४ वीस ५ वरिसाइं ।**
**मासा छ ६ नव ७ तिण्णि अ ८ चउ ९ तिग १० दुग ११ मिक्कग १२ दुगं च १३ ॥२३८॥**

ऋषभस्य छद्मस्थकालो वर्षसहस्रं, एवमजितादीनां यथाक्रमं वक्ष्यमाणवर्षशब्दसम्बन्धाद् द्वादशवर्षाणि २, चतुर्दशवर्षाणि ३, अष्टादशवर्षाणि ४, विंशतिवर्षाणि ५, षण्मासाः ६ नवमासाः ७, त्रिमासाः ८, चत्वारो ९, त्रयो मासाः १०, द्वौ मासौ ११, एको मासः १२, द्वौ मासौ १३ ॥२३८॥

**तिग १४ दुग १५ मिक्कग १६ सोलस वासा १७ तिण्णि अ १८ तहेवऽहोरत्तं १९ ।**
**मासिक्कारस २० नवगं २१ चउपण्ण दिणाइ २२ चुलसीई २३ ॥२३९॥**

वक्ष्यमाणवर्षशब्दसम्बन्धात् त्रीणि वर्षाणि १४, द्वे वर्षे १५, एकं वर्षं १६, षोडश वर्षाणि १७, त्रीणि दिनानि, हारिभद्रीयवृत्तिटीप्पनककारः पुनस्त्रीणि वर्षाणीति आह १८, अहोरात्रमेकं १९, एकादश मासाः २० नव मासाः २१ चतुःपञ्चाशद्दिनानि २२ चतुरशीतिर्दिनानि २३ ॥२३९॥

तह वारस वासाइं, जिणाण छउमत्थकालपरिमाणं ।
उग्गं च तवोकम्मं विसेसओ वद्धमाणस्स ॥२४०॥

तथेति समुच्चये द्वादश वर्षाणि किञ्चित्सातिरेकाणि ग्राह्याणि २४, एतज्जिनानां छद्मस्थकालपरिमाणं सर्वेषां च तीर्थकृतां छद्मस्थकालतपःकर्म उग्रमितरजन्तुभिर्दुरध्यवसेयं विशेषतो वर्द्धमानस्य सम्बन्धि तपो दुरध्यवसेयं, वक्ष्यमाणन्यायेन सोपसर्गत्वादपानकत्वाद्बहुत्वाच्च ॥२४०॥

अथ ज्ञानोत्पादद्वारमाह—

फग्गुणबहुलिकारसि उत्तरसाढाहि नाणमुसभस्स १ ।
पोसिकारसि सुद्धेरोहिणिजोएण अजिअस्स २ ॥२४१॥
कत्तिअबहुले पंचमि मिगसरजोगेण संभवजिणस्स ३ ।
पोसेसुद्धचउद्दसि अभीइ अभिणंदणजिणस्स ४ ॥२४२॥
चित्ते सुद्धिकारसि महाहि सुमइस्स नाणमुप्पण्णं ५ ।
चित्तस्स पुण्णिमाए पउमाभजिणस्स चित्ताहिं ६ ॥२४३॥

फग्गुणवहुले छट्ठी विसाहजोगे सुपासनामस्स ७ ।
फग्गुणबहुले सत्तमि अणुराह ससिप्पहजिणस्स ८ ॥२४४॥
कत्तिअसुद्धे तइया मूले सुविहिस्स पुप्फदंतस्स ९ ।
पोसे बहुलचउद्दसि पुव्वासाढाहि सीअलजिणस्स १० ॥२४५॥
पण्णरास माहवहुले सिज्जंसजिणस्स सवणजोएणं ११ ।
सयभिय वासुपुज्जे बीयाए माहसुद्धस्स १२ ॥२४६॥
पोसस्स सुद्धछट्ठी उत्तरभद्दवय विमलनामस्स १३ ।
वइसाह बहुलचउदसि रेवइजोएणऽणंतस्स १४ ॥२४७॥
पोसस्स पुण्णिमाए नाणं धम्मस्स पुस्सजोएणं १५ ।
पोसस्स सुद्धनवमी भरणी जोगेण संतिस्स १६ ॥२४८॥

चित्तस्स सुद्धतइआ कित्तिअजोगेण नाण कुंथुस्स १७ ।
कत्तिअसुद्धे बारसि अरस्स नाणं तु रेवईहिं १८ ॥२४९॥
मग्गसिरसुद्धइक्कारसीइ मल्लिस्स अस्सिणीजोगे १९ ।
फग्गुणवहुले बारसि सवणेणं सुव्वयजिणस्स २० ॥२५०॥
मगसिरसुद्धिक्कारसि अस्सिणजोगेण नमि जिणिंदस्स २२ ।
आसोअमावसाए नेमिजिणिंदस्स चित्ताहिं २२ ॥२५१॥
चित्ते बहुलचउत्थी विसाहजोएण पासनामस्स २३ ।
वइसाहसुद्धदसमी हत्थुत्तरजोगि वीरस्स २४ ॥२५२॥

'फग्गु०' इत्यादिद्वादशगाथाः सुगमाः ।

अथ कस्य कस्मिन् दिवसविभागे ज्ञानमुत्पन्नमित्याह—

तेवीसाए नाणं उप्पण्णं जिणवराण पुव्वण्हे ।
वीरस्स पच्छिमण्हे पमाणपत्ताए चरिमाए ॥२५३॥

त्रयोविंशतेस्तीर्थकराणां ज्ञानमुत्पन्नं पूर्वाह्णे सूरोद्गमनमुहूर्त्ते इत्यर्थः, वीरस्य पश्चिमाह्णे तत्रापि प्रमाणप्राप्तायां चरमपौरुष्याम् ॥२५३॥

अथ येषु क्षेत्रेषूत्पन्नं तदाह—

उसभस्स पुरिमताले वीरस्सुजुवालिआनईतीरे ।
सेसाण केवलाइं जेसुज्जाणेसु पव्वइआ ॥२५४॥

ऋषभस्य विनीताप्रत्यासन्ने पुरिमताले नगरे तत्रापि शकटमुखोद्याने न्यग्रोधपादपस्याधः १, वीरस्य ऋजुवालिकानदीतीरे गृहपतिश्यामाकखले सालतरोरधः, शेषाणां केवलानि येषु उद्यानेषु प्रव्रजितास्तेषु उत्पन्नानि॥२५४॥

अथ यस्य (येन) तपसोत्पन्नं तत्तप आह—

अट्ठमभत्तंतंमी पासोसहमल्लिरिट्ठनेमीणं ।
वसुपुज्जस्स चउत्थेण छट्ठभत्तेण सेसाणं ॥२५५॥

अष्टमभक्तान्ते चतुर्णां ज्ञानमुत्पन्नं, वासुपूज्यस्य चतुर्थेन, षष्ठभक्तेन शेषाणामेकोनविंशतेः, गतं ज्ञानद्वारम् ॥२५५॥ अथ सङ्ग्रहद्वारमाह—

चुलसीइं च सहस्सा १ एगं च २ दुवे अ ३ तिण्णि ४ लक्खाइं ।
तिण्णि अ वीसहिआइं ५ तीसहिआइं च तिण्णेव ६ ॥२५६॥

ऋषभस्य चतुरशीतिः सहस्राणि यतिशिष्यसङ्ग्रहप्रमाणं १, एवं यथाक्रमं एकं लक्षं २, द्वे लक्षे ३, त्रीणि लक्षाणि ४, विंशतिसहस्राधिकानि त्रीणि लक्षाणि ५, त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि ६ ॥२५६॥

तिण्णि अ ७ अड्ढाइज्जा ८ दुवे अ ९ एगं च १० सयसहस्साइं ।
चुलसीइं च सहस्सा ११ बिसत्तरि १२ अट्ठसट्ठिं च १३ ॥२५७॥

त्रीणि लक्षाणि ७, अर्धतृतीये लक्षे ८, द्वे लक्षे ९, एकं लक्षं १०, चतुरशीतिः सहस्राणि ११, द्विसप्ततिः सहस्राणि १२, अष्टषष्ठिः सहस्राणि १३ ॥२५७॥

छावट्ठिं १४ चउसट्ठिं च १५ बावट्ठिं १६ सट्ठिमेव १७ पण्णासं १८ ॥
चत्ता १९ तीसा २० वीसा २१ अट्ठारस २२ सोलस २३ सहस्सा ॥२५८॥

चउदस य सहस्साइं २४ जिणाण जइसीससंगहपमाणं ।
अज्जासंगहमाणं उसभाईणं अओ वुच्छं ॥२५९॥

षट्षष्टिसहस्राणि १४, चतुःषष्टिः सहस्राणि १५, द्विषष्टिः सह० १६, षष्टिः सह० १७, पञ्चाशत्सह० १८, चत्वारिंशत्सह० १९, त्रिंशत्सह० २०, विंशतिः सह० २१, अष्टादशसह० २२, षोडशसह० २३, चतुर्दशसह० २४, तदेव जिनानामृषभादिवर्धमान्तानां यथाक्रम यतिशिष्यसङ्ग्रहप्रमाण आर्यासङ्ग्रहमानमृषभादीनामितो वक्ष्ये ॥२५८--२५९॥ एतदेवाह—

तिण्णेव य लक्खाइं १ तिण्णि य तीसा य २ तिण्ण छत्तीसा ३ ।
तीसा य छच्च ४ पंच य तीसा ५ चउरो अ वीसा य ६ ॥२६०॥

ऋषभस्य त्रीणि लक्षाण्यार्यासङ्ग्रहोऽभूत् १, त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि २, षट्त्रिंशत्सहस्राधिकानि त्रीणि लक्षाणि ३, त्रिंशत्सहस्राधिकानि षट्ल० ४, त्रिंशत्सहस्राधिकानि पञ्चल० ५, विंशतिसहस्राधिकानि चत्वारिल०, हारिभद्रीयवृत्तिटिप्पनके तु त्रिंशत्सहस्राधि० इत्यक्षराणि सन्ति ६, ॥२६०॥

चत्तारि अ तीसाइं ७ तिण्णि अ असिआइ ८ तिण्हमेत्तो अ ९ ।
वीसुत्तरं १० छलहिअं ११ तिसहस्साहिअं च लक्खं च १२ ॥२६१॥

त्रिंशत्सहस्राधिकानि चत्वारिल० ७, अशीतिसहस्राधिकानि त्रीणि लक्षाणि ८, "तत्तिमित्तोअ" त्ति त्रिलक्षमात्रः आयसङ्ग्रह इति गम्यते ९, विंशतिसहस्राधिकं लक्षं १०, षट्सहस्राधिकं लक्षं ११, त्रिंशत्सहस्राधिकं लक्षं १२, इति गाथार्थः, हारिभद्रीयवृत्तिटिप्पनककारः पुनरेवमाह–अष्टजिनानन्तरं 'तिन्हमित्तो" त्ति त्रयाणां तीर्थकृतां सुविध्यादीनां इत ऊर्द्ध्वं यथाक्रमं वक्ष्य इति गम्यते। तदेवाह– "वीसुत्तरं छलहिअ तिससहस्सहिअंच" त्ति अनन्तरलक्षशब्दस्येहापि सम्बन्धाद्विंशतिसहस्राधिकं लक्षं ९, षड्भिरार्यिकाभिरधिकं लक्षं १०, त्रिभिः सहस्रैरधिकं लक्षं ११, "लकृखं" त्ति लक्षमेकम् १२ ॥२६१॥

लक्खं १३ अट्ठसयाणि अ १४ बावट्ठि सहस्स १५ चउसयसमग्गा ।
एगट्ठी छच्च सया १६ सट्ठिसहस्सा सया छच्च १७ ॥२६२॥

विमलस्यैकं लक्षं १३, लक्षशब्दस्येहापिसम्बन्धादेकं लक्षमष्टशतानि १४, द्वाषष्टिसहस्राणि "चउसयसमग्गा" त्ति अनन्तचतुः शतसमग्राणि चतुःशताधिकानि १५, टिप्पनककृदत्राप्येवमाह–विमलस्याष्टभिः शतैरधिकं लक्षं १३, सम्पूर्णानि द्विषसहस्राणि १४, "चउसयसमगा" त्ति अनन्तरातिक्रान्ताः सहस्रा अत्रापि सम्बन्ध्यते, ततश्चतुर्भिः शतैः समग्राणि द्विषष्टिसहस्राणि १५ इति, षट्शताधिकान्येकषष्टिः सहस्राणि १६, षट्शताधिकानि षष्टिः सहस्राणि १७ ॥२६२॥

सट्ठिं १८ पणपण्ण १९ पण्णं २० गचत्त २१ चत्ता २२ तहट्ठतीमं च २३ ।
छत्तीसं च सहस्सा २४ अज्जाण संगहो एसो ॥२६३॥

षष्टिः सहस्राणि १८, पञ्चपञ्चाशत्सह० १९, पञ्चाशत्सह० २०, एकचत्वारिंशत्सह० २१, चत्वारिंशत्सह० २२, अष्टत्रिंशत्सह० २३, षट्त्रिंशत्सह० २४, एष उक्तस्वरूपश्चतुर्विंशतेरपि तीर्थकृता यथाक्रममार्यिकाणां सङ्ग्रहो विज्ञेयः ॥२६३॥

पढमाणुओगसिद्धो पत्तेअं सावयाइआणंपि ।
नेओ सव्वजिणाणं सीसाणं परिग्गहो (संगहो) कमसो ॥२६४॥



श्रावकादीनामादिशब्दात् श्राविकाचतुर्दशपूर्वधरादिसङ्ग्रहः प्रत्येकं सङ्ग्रहः । क्रमशो—यथाक्रमं सर्वजिनानां प्रथमानुयोगशिष्टोऽत्र ज्ञेयः ॥२६४॥ गतं सङ्ग्रहद्वारं तीर्थद्वारमाह—

तित्थं चाउव्वण्णो संघो सो पढमए समोसरणे ॥
उप्पण्णो अ जिणाणं वीरजिणिंदस्स बीअंमि १३ ॥२६५॥

तीर्थं—चतुर्वर्णः सङ्घः, स जिनानां प्रथमे समवसरणे उत्पन्नः, वीरजिनेन्द्रस्य द्वितीये, यत्र केवलमुत्पन्नं तदपेक्षया मध्यमाया द्वितीयमुच्यते ॥२६५॥ अथ गणद्वारमाह—

चुलसीइ १ पंचनउई २ विउत्तरं ३ सोलसुत्तर ४ सयं च ५ ।
सत्तहिअं ६ पणनउई ७ तेणउई ८ अट्ठसीई अ ९ ॥२६६॥

ऋषभस्य चतुरशीतिः १, पञ्चनवतिः २, द्व्युत्तरं शतमिति गम्यं ३, षोडशोत्तरं शतं च ४, सम्पूर्णं शतं ५, सप्तोत्तरं शतं ६, पञ्चनवतिः ७, त्रिनवतिः ८, अष्टाशीतिश्च ९ ॥२६६॥

इकासीई १० छावत्तरी अ ११ छावट्ठि १२ सत्तपण्णा य १३ ।
पण्णा १४ तेयालीसा १५ छत्तीसा १६ चेव पणतीसा १७ ॥२६७॥

एकाशीतिः १०, षट्सप्ततिः ११, षट्षष्टिः १२, सप्तपञ्चाशत् १३, पञ्चाशत् १४, त्रिचत्वारिंशत् १५, षट्त्रिंशत् १६, पञ्चत्रिंशत् १७ ॥२६७॥

तित्तीस १८ अट्ठवीसा १९ अट्ठारस २० चेव तह य सत्तरस २१ ।
इक्कारस २२ दस २३ नवगं २४, गणाण माणं जिणिंदाणं १७ ॥२६८॥

त्रयस्त्रिंशत् १८, अष्टाविंशतिः १९, अष्टादश २०, सप्तदश २१, एकादश २२, दश, २३, नव, २४ इति यथाक्रममृषभादिजिनेन्द्राणां यथाक्रमं मानं विज्ञेयं गणनाम् ॥२६८॥

गाथा-२६६-६७-६८

अथ गणधरद्वारमाह—

एकारसउ गणहरा जिणस्स वीरस्स सेसयाणं तु ।
जावइआ जस्स गणा तावइआ गणहरा तस्स १८ ॥२६९॥

गणधरा मूलमात्रकर्तारस्ते च वीरजिनस्यैकादश, गणास्तु नव, अन्त्ययोर्द्वयोर्युगलयोरेकैकवाचनाचारक्रियास्थत्वा, शेषाणां यस्य यावन्तो गणास्तस्य तावन्तो गणधराः, प्रतिगणधरं भिन्नर वाचनाचारक्रियास्थत्वात् ॥२६९॥

अथ धर्मोपायदेशकद्वारमाह—

धम्मोवाओ पवयणमहवा पुव्वाइं देसगा तस्स ।
सव्वजिणाण गणहरा चउदसपुव्वी व जे जस्स ॥२७०॥

धर्मोपायः प्रवचनं तदन्तरेण धर्मस्यासम्भवात्, अथवा पूर्वाणि तस्य—धर्मोपायस्य देशकाः सर्वजिनानां गणधरास्तेषां मूलकर्तृत्वात्, अथवा ये यस्य तीर्थकृतश्चतुर्दशपूर्विणस्ते धर्मोपायस्य देशकाः, परिपूर्णश्रुततया तेषा यथावस्थितवस्तुदेशकत्वात् ॥२७०॥

अथ प्रकारान्तरेण धर्मोपायमाह—

सामाइयाइया वा वयजीवणिकायभावणा पढमं ।
एसो धम्मोवाओ जिणेहि सव्वेहि उवइट्ठो १९ ॥२७१॥

वाशब्दः प्रकारान्तरद्योतनार्थः सामायिकमादिर्यासां ताः सामायिकादिकाः सामायिकपूर्विका इत्यर्थः । व्रतानि प्राणातिपातविरमणादीनि, जीवनिकायाः पृथिव्यादयः, भावनाः पञ्चविंशतिरऽनित्यत्वादिविषया वा द्वादश, एषां द्वन्द्वस्ततः सामायिकाङ्गीकारपूर्विकाः सत्यो व्रतजीवनिकायभावना इत्येष धर्मोपायो जिनैः सर्वैरुपदिष्ट इति सम्बन्धः, कदा? प्रथम आद्यसमवसरणप्रवर्त्तनावसर एवेत्यर्थः, उत्तरकालं जिनकल्पपरिहारविशुद्धिकभिक्षुप्रतिमाभिग्रहादि-भेदभिन्नोऽनेकविधो द्रष्टव्यः, त एव जिनास्तस्योपदेशकाः ॥२७१॥



इति श्रीमद्धीरसुन्दरसूरिविरचिता श्री आवश्यकनिर्युक्तेरवचूर्णः

। पत्र २४० पर्यन्तः प्रथमो भागः ।

## [illegible] પુ[illegible]ના હકીકત-સારાંશ

( સ્ટોકમાં જે પુસ્તકો છે તેની હકીકત આપવામાં આવી છે )

### ૧. ગ્રથાંક ૮૫. આવશ્યકસૂત્ર ભાગ ત્રીજો.

આ ગ્રથ શ્રીગણધર ભગવંતકૃત્ છે. શ્રીમલયગિરિસૂરિકૃત વિવરણ સહિત શ્રુતકેવલિશ્રીમદ્દભદ્રબાહુસ્વામિસૂત્રિત નિર્યુક્તિયુક્ત. સંશોધક આચાર્યશ્રી આનંદસાગરસૂરિજી. પ્રકાશક શ્રી જીવણચંદ સાકેરચંદ ઝવેરી. મુદ્રણકાલ વિ. સં. ૧૯૯૨ ઈ. સ. ૧૯૩૬ વીર સં. ૨૪૬૨. મુદ્રણસ્થાન નિર્ણયસાગર પ્રેસ. મુંબઈ. શ્લોકટીકા ૧૮૦૦૦ પ્રમાણ છે કિંમત રૂા. ૨–૫૦ કુલ ૧૦૦૦ નકલો વિષય ષડાવશ્યકનો છે. ભાષા સંસ્કૃત–પ્રાકૃત છે, કુલ ખર્ચ રૂા. ૫૦૦૦ થયો છે આવશ્યકસૂત્ર ભા. ૧–૨ આગમોદય સમિતિ તરફથી પ્રસિદ્ધ થયો હતો.

### ૨. ગ્રંથાંક ૯૨. અભિધાન ચિન્તામણિકોશ.

આ ગ્રંથના કર્તા કલિકાલ સર્વજ્ઞ શ્રીમદ્ હેમચન્દ્રચાર્ય છે આ ગ્રથનો વિષયક્રમ (૧) લિંગાનુશાસન (૨) એકાક્ષરકોષ (૩) અભિધાન ચિન્તામણિ (૪) શેષનામમાલા (૫) નામમાલા શિલોચ્છ (૬) નિઘંટુશેષ (૭) અભિધાન ચિન્તામણિકોશની અકારાદિ અનુક્રમણિકા છે એકાક્ષર નામમાલા સુધાકુશલ વિરચિત નામમાલાશિલોચ્છ જિનદેવસૂરિવિરચિત છે

સંશોધક–આચાર્યશ્રી આનંદસાગરસૂરિ પ્રકાશક–શ્રી હીરાચંદ કસ્તુરચંદ ઝવેરી અને મોતીચંદ મગનભાઇ ચોકસી, મુદ્રણકાલ વિ. સં. ૨૦૦૨ ઈ સ ૧૯૪૬ વીર સ ૨૪૭૨ મુદ્રણસ્થાન–નિર્ણયસાગર પ્રેસ. મુંબઇ. વિષય શબ્દસંગ્રહ, ભાષા–સંસ્કૃત, પૃષ્ઠ સંખ્યા ૭૮૮ કિં. રૂા. ૪–૦૦ કુલ નકલ ૧૨૫૦ કુલ ખર્ચ રૂા ૧૦૦૦૦ થયો છે.

### ૩. ગ્રંથાંક ૯૩ જૈનકુમારસંભવ મહાકાવ્ય

આ ગ્રંથના કર્તા અંચલગચ્છીય આચાર્યશ્રી જયશેખરસૂરિ છે. ટીકાકાર આચાર્યશ્રી ધર્મશેખરસૂરિ સંશોધક શ્રીમદ્ વિજયક્ષમાભદ્ર સૂરિ અને આચાર્યશ્રી વિજયલબ્ધિસૂરિ શિષ્ય મુનિશ્રી વિક્રમવિજયજી. પ્રકાશક શ્રી હીરાચંદ કસ્તુરચંદ ઝવેરી અને મોતીચંદ મગનભાઈ ચોકસી. પ્રસ્તાવના મુનિશ્રી વિક્રમવિજયજીએ લખી છે આભારદર્શક શ્રી હીરાચંદ કસ્તુરચંદ ઝવેરી. મુદ્રણકાલ વિક્રમ સંવત ૨૦૦૨ ઈ. સ ૧૯૪૬, વીર સંવત ૨૪૭૨ મુદ્રણ સ્થાન–નિર્ણયસાગર પ્રેસ, મુંબઇ વિષય મહાકાવ્ય ચરિત્ર. ભાષા સંસ્કૃત, પૃષ્ઠ સંખ્યા ૩૯૬. કિંમત રૂા. ૨–૫૦ કુલ નકલ ૭૫૦ કુલ ખર્ચ રૂા. ૫૦૦૦ થયો છે

### ૪. ગ્રંથાંક ૯૪ સિદ્ધહેમચન્દ્ર–શબ્દાનુશાસન–બૃહદ્વૃત્ત્યવચૂર્ણિ.

(બૃહદ્વૃત્તિદુર્ગપદ–વિવરણ નવપાદી) આ ગ્રન્થના કર્તા આચાર્યશ્રી હેમચન્દ્રસૂરિજી છે. દુર્ગપદવિવરણ–અવચૂર્ણિના કર્તા શ્રી જયાનંદસૂરિના શિષ્ય શ્રી અમરચન્દ્ર મુનિ છે. સંશોધક–આચાર્યશ્રી ચન્દ્રસાગરસૂરિજી છે. પ્રકાશક શ્રી મોતીચંદ મગનભાઈ ચોકસી. મુદ્રણકાલ–વિ સં. ૨૦૦૪ ઈ સ. ૧૯૪૮ વીર સંવત ૨૪૭૪ મુદ્રણસ્થાન–મહોદય મુદ્રણાલય, ભાવનગર. પૃષ્ઠ સંખ્યા ૩૧૨, કિંમત રૂા. ૫–૦૦ વિષય–સંસ્કૃત વ્યાકરણ કુલ નકલ ૫૦૦ કુલ ખર્ચ રૂા. ૭૫૦૦ થયો છે. વિશેષ આગમોદ્ધારક આચાર્યશ્રી આનંદસાગર સૂરિશ્વરજી હસ્ત લિખિતકૃતિ જે અત્યાર સુધી અપ્રસિદ્ધ હતી તે દ્વત્રિંશિકા પ્રતિકૃતિ (ફોટો) આમા દાખલ કરી છે. આદિમા શ્રી ચન્દ્રકાન્તસાગરજીએ પં. શ્રીચન્દ્રસાગરગણિની ચાતુર્માસ નોંધ આપી છે.

### ૫. ગ્રંથાંક ૯૫. વીતરાગસ્તોત્ર

આ ગ્રંથના કર્તા–કલિકાલ સર્વજ્ઞ–આચાર્યશ્રી હેમચન્દ્રસૂરિ છે. શ્રી વિશાલરાજસૂરિ શિષ્ય શ્રીસોમોદયગણિકૃત અવચૂર્ણિ, શ્રી દેવભદ્રસુનિન્દ્ર શિષ્ય શ્રી પ્રભાનન્દ્રસૂરિકૃત વિવરણ અને મુનિશ્રી ચન્દ્રપ્રભસાગરકૃત મૂલનો ગુજરાતી અનુવાદ સહિત. સંપાદક–સંશોધક

### ૬. ગ્રંથાંક ૯૯. શ્રમણ સૂત્રાદિ અવચૂરિ.

સાધુ સાધ્વીઓને ઉપયોગી શ્રી શ્રમણસૂત્ર પાક્ષિકસૂત્ર–ક્ષામણકસૂત્રો અવચૂરિ સહિત પ્રકાશિત કર્યા છે સંશોધક–આચાર્યશ્રી વિજયલબ્ધિસૂરિ શિષ્ય મુનિશ્રી લલિતાંગવિજય પ્રકાશક મોતીચંદ મગનભાઈ ચોકસી મુદ્રણકાલ, વિ. સં. ૨૦૦૭ ઈ સ. ૧૯૫૧. વીર સંવત ૨૪૭૭ મુદ્રણસ્થાન સરસ્વતી મુદ્રણાલય, સુરત. કિં રૂા ૧–૦૦. કુલ નકલ ૫૦૦ કુલ ખર્ચ રૂા ૧૨૫૦ થયો છે.

### ૭. ગ્રંથાંક ૧૦૦. વન્દન પ્રતિક્રમણ અવચૂરિ

પૂર્વના મહર્ષિએ રચેલી આ અવચૂરિ વન્દન પ્રતિક્રમણ નામની છે પ. પૂ આચાર્ય પ્રવર શ્રી દેવેન્દ્રસૂરિકૃત વન્દારુવૃત્તિ તથા આચાર્યશ્રી રત્નશેખરસૂરિ કૃત અર્થદીપિકા જે છે, તેમાથી કથાઓ વગેરે છોડીને અવચૂરિ રૂપ જે ટીકાનો ભાગ તે આ ગ્રંથમા લેવામા આવેલો છે, તેથી આ અવચૂરિ કહેવાય છે, આ અવચૂરિના કર્તાએ કોઈ જગ્યાએ પોતાના નામનો ઉલ્લેખ કર્યો નથી. તેથી આ અવચૂરિ અનિર્દિષ્ટ નામવાળી છે સંપાદક–આચાર્યશ્રી આનન્દસાગરસૂરિના અંતેવાસિ મુનિશ્રી કંચનવિજય તથા શ્રી ક્ષેમંકરસાગર પ્રકાશક-મોતીચંદ મગનભાઈ ચોકસી મુદ્રણકાલ-વિ. સં ૨૦૦૮ ઈ સ. ૧૯૫૨ વીર સંવત ૨૪૭૮. મુદ્રણસ્થાન નિર્ણયસાગર પ્રેસ, મુંબઈ વિષયવન્દન-ષડાવશ્યક, ભાષા સંસ્કૃત કિં. રૂા. ૧–૫૦ કુલ નકલ ૫૦૦ કુલ ખર્ચ ૫૫૦૦ થયો છે

### ૮. ગ્રંથાંક ૧૦૨. આદ્ય ( શ્રાવકધર્મ ) પંચાશકચૂર્ણિ.

આચાર્યશ્રી હરિભદ્રસૂરિ કૃત પંચાશક ગ્રંથમાનુ એક શ્રાવકધર્મ પંચાશક પ્રકરણ શ્રી યશોદેવસૂરિ કૃત ચૂર્ણિસહિતનુ આ

મુનિ શ્રી કંચનવિજય તથા શ્રી ક્ષેમંકરસાગરજી.
પ્રકાશન પ્રથમવાર જ થાય છે. સંપાદક–આચાર્યશ્રી આનન્દસાગરસૂરિન અ વીર સંવત ૨૪૭૮. મુદ્રણસ્થાન, મહોદય મુદ્રણાલય,
પ્રકાશક મોતીચંદ મગનભાઈ ચોકસી. મુદ્રણકાલ વિ. સં. ૨૦૦૮. ઇ. સ. ૧૯૫૨.
ભાવનગર. કિં. રૂા. ૨–૫૦ કુલ નકલ ૫૦૦ કુલ ખર્ચ રૂા. ૨૫૦૦ થયો છે.

**૯. ગ્રંથાંક ૧૦૩. શ્રી દશવૈકાલિકસૂત્ર**

આ ગ્રંથના કર્તા શ્રી શય્યંભવસૂરિજી છે. ટીકાકાર શ્રી સુમતિસાધુસૂરિજી છે. સંપાદક–શ્રી આનન્દસાગરસૂરિના અન્તેવાસિ મુનિ શ્રી કંચનવિજય તથા શ્રી ક્ષેમંકરસાગરજી પ્રકાશક–મોતીચંદ મગનભાઈ ચોકસી. મુદ્રણકાલ–વિ. સ. ૨૦૧૦. ઇ. સ. ૧૯૫૪. વીર સંવત ૨૪૮૦. વિષય સાધુ–સાધ્વીના આચાર. ભાષા પ્રાકૃત–સંસ્કૃત. મુદ્રણસ્થાન–મહોદય મુદ્રણાલય, ભાવનગર. કિં. રૂા. ૩–૦૦ કુલ નકલ ૫૦૦ કુલ ખર્ચ રૂા. ૩૦૦૦ થયો છે.

**૧૦. ગ્રંથાંક ૧૦૪. શ્રી ઉત્તરાધ્યયન અવચૂરિ ભા. ૧ લો.**

આ અવચૂર્ણિના કર્તા ચિરંતનાચાર્ય છે. આ સકથાનક લઘુ વૃત્તિ છે. આ ગ્રંથના ૩૬ અધ્યયનો છે, તેમાથી આ પ્રથમ ભાગમા ૨૩ અધ્યયનો આપવામા આવ્યાં છે. સંપાદક–આચાર્ય શ્રી આનંદસાગરસૂરિજીના ઉપસંપદા પ્રાપ્ત મુનિ શ્રી કંચનવિજયજી પ્રકાશક–મોતીચંદ મગનભાઇ ચોકસી. મુદ્રણકાલ–વિ. સં. ૨૦૧૬. ઈ. સ. ૧૯૬૦. વીર સંવત ૨૪૮૬. મુદ્રણસ્થાન–નિર્ણયસાગર પ્રેસ, મુંબઈ. ભાષા પ્રકૃત–સંસ્કૃત કિં રૂા. ૪–૦૦. કુલ નકલ ૫૦૦. કુલ ખર્ચ રૂા. ૪૦૦૦ થયો છે.

**૧૧. ગ્રંથાંક ૧૦૫. શ્રી પિણ્ડનિર્યુક્તિ અવચૂરિ.**

શ્રી શય્યંભવસૂરિકૃત શ્રી દશવૈકાલિકસૂત્રમા પાંચમું અધ્યયન પિણ્ડૈષણા છે. તેની નિર્યુક્તિ શ્રી ભદ્રબાહુસ્વામી મહારાજે

... નામના ગ્રંથ છે. તેના ઉપર અવચૂરિ શ્રી જયકીર્તિસૂરિના શિષ્ય શ્રી ક્ષમારત્નજીએ રચી છે. શ્રી વીર ગણિરચિત શિષ્યહિતા નામની વૃત્તિનો આદિઅંત ભાગ પરિશિષ્ટ ૯ મા આપવામા આવ્યો છે. અંચલગચ્છીય શ્રી મેરુતુંગ સૂરિના શિષ્ય શ્રી માણિક્યશેખરસૂરિ રચિત દીપિકાનો આદિઅંત ભાગ પરિશિષ્ટ ૧૦મા આપવામા આવ્યો છે. આનું પ્રકાશન પ્રથમવાર થાય છે. સંપાદક–આચાર્યશ્રી આનન્દસાગરસૂરિજીના ઉપસંપદા પ્રાપ્ત મુનિ શ્રી કંચનવિજયજી. પ્રકાશક–મોતીચંદ મગનભાઈ ચોકસી. મુદ્રણકાલ–વિ. સં. ૨૦૧૪. ઇ. સ. ૧૯૫૮ વીર સંવત ૨૪૮૪. કિં રૂ. ૩–૦૦ ભાષા પ્રાકૃત–સંસ્કૃત. મુદ્રણસ્થાન–મહોદય મુદ્રણાલય, ભાવનગર કુલ નકલ ૫૦૦ કુલ ખર્ચ રૂ. ૧૫૦૦ થયો છે

**૧૨. ગ્રંથાંક ૧૦૬. શ્રી શ્રાદ્ધવિધિ પ્રકરણ શ્રાદ્ધવિધિ કૌમુદીવૃત્તિસહિત**

આ ગ્રંથના કર્તા શ્રી રત્નશેખરસૂરિ છે. તેના ઉપર સ્વોપજ્ઞ 'શ્રાદ્ધવિધિ–કૌમુદી' વૃત્તિ છે. સંશોધક–શ્રીમદ્ વિજયલબ્ધિસૂરિ શિષ્ય પં. શ્રી વિક્રમવિજયગણિ અને મુનિ શ્રી ભાસ્કરવિજયજી. આદ્વિતીય સંસ્કરણ છે

પ્રકાશક–મોતીચંદ મગનભાઈ ચોકસી મુદ્રણકાલ–વિ સં. ૨૦૧૬. ઈ સ. ૧૯૬૦. વીર સંવત ૨૪૮૬. મુદ્રણસ્થાન–નિર્ણયસાગર પ્રેસ; મુંબઈ. વિષય–શ્રાવકધર્મ અંગે વિધિવાદનુ નિરૂપણ ભાષા પ્રાકૃત–સંસ્કૃત. કિં રૂ. ૪–૦૦ કુલ નકલ ૫૦૦ કુલ ખર્ચ રૂ ૪૦૦૦ થયો છે.

**૧૩. ગ્રંથાંક ૧૦૮. શ્રીમદાવશ્યકસૂત્ર નિર્યુક્તેરવચૂર્ણિ : (પ્રથમો વિભાગ )**

આ અવચૂર્ણિના કર્તા ભટ્ટારક શ્રી જ્ઞાનસાગરસૂરિ છે, તેઓશ્રી તપાગચ્છમા થઇ ગયેલ શ્રી દેવસુંદરસૂરિના શિષ્ય હતા. તેઓશ્રીનો સત્તાકાલ ૫ંદરમા સૈકાનો છે તેઓશ્રીએ આ અવચૂર્ણિ શ્રી હરિભદ્રસૂરિકૃત વૃત્તિની અનુસારે કરેલી છે. સંશોધક :

મુદ્રણકાલ · વિ. સ. ૨૦૨૧, ઇ સ. ૧૯૬૫, વીર સંવત ૨૪૯૧

પંન્યાસ શ્રી માનવિજયગણિ. પ્રકાશક મોતીચંદ મગનભાઈ ચોકસી. નિર્યુક્તિ ગાથા ૧૦૬૮
આ પ્રથમ વિભાગમાં સામાયિક અધ્યયનની અવચૂર્ણિ છે. પ્રતના પાના ૪૫૨.
મુદ્રણસ્થાન : નિર્ણયસાગર પ્રેસ, મુંબઈ કિ. રૂ. ૫–૦૦ કુલ નકલ ૫૦૦.
છે. વિષય : ષડાવશ્યકનો છે. ભાષા : પ્રાકૃત, સંસ્કૃત,

**૧૪. ગ્રંથાંક ૧૦૮. શ્રીમદાવશ્યકસૂત્ર નિર્યુક્તેરવચૂર્ણિ :** (દ્વિતીયો વિભાગ ·)

આ બીજા ભાગને પણ પ્રથમ ભાગની માફક ગ્રંથાંક : ૧૦૮ આપવામા આવ્યો છે. બીજા ભાગનુ સંપાદન પણ પંન્યાસ શ્રી માન-
વિજયગણિએ કર્યું છે. આમા આવશ્યકસૂત્રના બીજા ચતુર્વિંશતિ અધ્યયનથી છેલ્લા છઠ્ઠા પચ્ચક્ખાણ અધ્યયન સુધીની નિર્યુક્તિની અવચૂર્ણિ
આપવામાં આવી છે નિર્યુક્તિ ગાથા ૧૦૬૯ થી ૧૬૩૭. પ્રતના પાના ૨૮૬ છે. સાથે સાથે પરિશિષ્ટ ૧ આવશ્યકસૂત્ર અંગેના ગ્રંથોની યાદી.
પરિશિષ્ટ–૨ આવશ્યકસૂત્ર નિર્યુક્તિ ઉપર શ્રી તિલકાચાર્યકૃત. લઘુવૃત્તિનો આદિ વિભાગ, પાના ૧ થી ૪૦ ભાષા પ્રાકૃત–સંસ્કૃત. વિષય :
ષડાવશ્યકનો છે. પ્રકાશક : મોતીચંદ મગનભાઈ ચોકસી. મુદ્રણસ્થાન : મહોદય મુદ્રણાલય ભાવનગર તથા નવપ્રભાત મુદ્રણાલય, રાજનગર
મુદ્રણકાલ : વિ. સ. ૨૦૨૧. ઈ. સ ૧૯૬૫ વીર સવત ૨૪૯૧. કિ ૩–૦૦ કુલ નકલ ૫૦૦.

**૧૫. ગ્રંથાંક ૧૦૯. શ્રી સૂયગડાંગસૂત્ર–દીપિકા.** (પહેલો શ્રુતસ્કન્ધ · પ્રથમો વિભાગ :)

આ સૂત્રના મૂલ કર્તા સુધર્માસ્વામીગણધર. ભાષા : પ્રાકૃત. દીપિકાના કર્તા · શ્રી સાધુરંગગણિ, ભાષા : સંસ્કૃત. વિષય : જૈન દર્શનનું
સ્થાપન અને પરદર્શનનું નિરાકરણ (દાર્શનિક) સંપાદક : શ્રી બુદ્ધિસાગરગણિ, પ્રકાશક : મોતીચંદ મગનભાઈ ચોકસી. મુદ્રણકાલ : વિ. સં.
૨૦૧૫, ઈ. સ. ૧૯૫૯, વીર સંવત ૨૪૮૫ મુદ્રણસ્થાન · મહોદય મુદ્રણાલય. ભાવનગર. કિં રૂ ૩–૦૦ કુલ નકલ ૫૦૦.

૨૦૧૫, ઇ સ ...

## ૧૬. ગ્રંથાંક ૧૧૦. શ્રી સૂયગડાંગસૂત્ર–દીપિકા. (દ્વિતીય શ્રુતસ્કન્ધ દ્વિતીય વિભાગ )

આ દીપિકા શ્રી સાધુરગગણિએ તથા શ્રી હર્ષકુલગણિએ રચી છે જેનો પ્રથમ ભાગ ગ્રથાક ૧૦૯ અમારા તરફથી પ્રકાશિત થયેલો છે ભાષા પ્રાકૃત–સસ્કૃત વિષય જૈન દર્શનનુ સ્થાપન અને પરદર્શનનુ નિરાકરણ (દાર્શનિક) સપાદક શ્રી બુદ્ધિસાગરગણિ પ્રકાશક મોતીચદ મગનભાઈ ચોકસી મુદ્રણકાલ વિ ૨૦૧૯, ઈ સ ૧૯૬૨, વીર સવત ૨૪૮૯ મુદ્રણસ્થાન મહોદય મુદ્રણાલય–ભાવનગર કિ. ૩–૦૦ કુલ નકલ ૫૦૦

## ૧૭. ગ્રંથાંક ૧૧૫. શ્રી અલ્પપરિચિત સૈદ્ધાન્તિક શબ્દકોષ (દ્વિતીય વિભાગ )

આ ગ્રથનો પહેલો ભાગ શ્રી આનન્દસાગરસૂરીશ્વરજી સકલિતસપૂર્ણસ્વરસુધાનો ગ્રથાક ૧૦૧ વિ સ ૨૦૧૦ ઇ સ ૧૯૫૪મા અમારા તરફથી પ્રકાશિત થયો હતો તેનો જ આ બીજો ભાગ શ્રી આનન્દસાગરસૂરીશ્વરજી સકલિત છે આમા ક થી ઝ સુધીનો શબ્દકોષ છે સપાદક શ્રી કચનવિજયજી અને શ્રી પ્રમોદસાગરજી સગ્રાહક શ્રી ગુણસાગરજી પ્રકાશક મોતીચદ મગનભાઈ ચોકસી. ભાષા પ્રાકૃત–સસ્કૃત વિષય આગમગતસૈદ્ધાન્તિક શબ્દોનો સગ્રહ અને અર્થ સક્ષેપમા ટીકાકારોને આધારે મુદ્રણકાલ વિ. સ ૨૦૨૦ ઈ. સ ૧૯૬૪ વીર સવત ૨૪૯૦, મુદ્રણસ્થાન · જૈનેન્દ્ર મુદ્રણાલય, લલિતપુર કિ રૂા ૫–૦૦ કુલ નકલ ૫૦૦

### આઠ ગ્રથો પ્રેસમાં છે

(૧) નદીસૂત્ર અવચૂરિ ભા ૧ (૨) જમ્બુદ્વિપ્રજ્ઞપ્તિચૂર્ણિ (૩) નદીસૂત્ર અવચૂરિ ભા ૨ (૪) અલ્પપરિચિતસૈદ્ધાન્તિક શબ્દકોષ ભા ૩ (૫) ભગવતી અવચૂરિ (૬) જ્ઞાતાધર્મ (૭) આચારાગ દીપીકા (૮) જબુવૃતિ

## શ્રીમતી આગમોદય સમિતિના પ્રકાશનો

| | કિં. રૂા. પૈ. |
|---|---|
| ૧ નંદ્યાદિગાથાદ્યકારાદિયુતો (સપ્તસૂત્ર) વિષયાનુક્રમ | ૨ – ૦૦ |
| ૨ ભક્તામરસ્તોત્ર પાદપૂર્તિરૂપ કાવ્ય ટીકા ભાષાંતર | |
| ,, દ્વિતીય વિભાગ ,, | ૩ – ૫૦ |
| ૩ સ્તુતિ ચતુર્વિંશતિકા સચિત્ર શ્રી શોભનમુનિ કૃતા સંસ્કૃતા. | ૮ – ૦૦ |
| ૪ ,, શ્રી બપ્પભટ્ટિસૂરિકૃતા ભાષાંતર યુક્તા. | ૬ – ૦૦ |
| ૫ ,, કવિધનપાલકૃતા વ ઐન્દ્ર સ્તુતિ. | ૬ – ૦૦ |
| ૬ લોકપ્રકાશ ભા ૨ જો ક્ષેત્રલોકસર્ગ ૧૨ થી ૨૦ ભાષાતર સહિત | ૩ – ૫૦ |

卐